लोकप्रियशास्त्रीयग्रन्थमाला - ६

गदाधरभट्टाचार्यविरचितः

# व्युत्पत्तिवादः

( सुदर्शनाचार्यविरचित आदर्शटीकासहितः )

( द्वितीयोभागः )

प्रधानसम्पादकः

**प्रो. राधावल्लभत्रिपाठी**

कुलपतिः

सम्पादकः

भूमिकालेखकश्च

**प्रो. हरेरामत्रिपाठी**

आचार्योऽध्यक्षश्च

सर्वदर्शनविभागः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली




राष्ट्रियसंस्कृतसंस्थानम्

मानितविश्वविद्यालयः

नवदेहली

# पुरोवाक्

न्यायविद्यास्वरूपायाः देवतायाः स्वात्मनश्च तुष्टये व्युत्पित्सूनां व्युत्पन्नानामुपकाराय च सरलतमगम्भीरविचारपरिपूर्णया आदर्शव्याख्यया सनाथीकृतं व्युत्पत्तिवादाख्यं ग्रन्थरत्नं प्रकाश्यते। तत्र विविधवादिप्रतिपत्त्युपस्थापनमुखेन स्वसिद्धान्तप्रतिपादनैककुशला नानाविचारोपबृंहिता सम्पूर्णा आदर्शटीकेयं लोकप्रियशास्त्रीयग्रन्थमालायां पञ्चमषष्ठमग्रन्थरूपेण प्रकाश्यते। अन्यत्र विप्रतिपन्नस्यापि प्रमाणचतुष्टयस्य न्यायशास्त्रेऽभ्युपगततया तदन्तःपातिन आगमप्रमाणोपजीव्यपदपदार्थसंसर्गजातस्य विचारितत्वसच्छब्दखण्डे व्युत्पत्तिवादस्यैव महतो ग्रन्थस्य ज्येष्ठत्वमिति सर्वे विद्वांसः वदन्ति। अत एव परम्परया शब्दप्रमाणविचारपटोरस्य व्युत्पत्तिवादग्रन्थस्यानितरसाधारणतया कृत्स्नेऽपि कृतिवर्गे विद्वत्प्रायेषु छात्रेषु च भूयानादरातिशयो विलोक्यते।

अस्य च महामहोपाध्यायश्रीगदाधरभट्टाचार्यप्रणीतत्वमपि वैलक्षण्यं ग्रन्थोऽयं द्योतयति। यद्यपि ग्रन्थस्यैतस्य बहुशष्टीका यत्र तत्र मुद्रितास्समुपलभ्यन्ते आदर्शटीकेयमपि द्वितीयाकारकपर्यन्ता मुद्रिता तथापि सम्पूर्णव्युत्पत्तिवादस्येयं टीका इदानीं दुर्लभा वर्तत इति। आदर्शटीकायाः अन्ते शास्त्रिणा उक्तम् ''बालानामुपकाराय द्वावादर्शौ प्रकाशितौ'' इत्यनेन सर्वजनोपकारकेयं टीका वर्तत इति प्रतीयते अत एव लोकप्रियशास्त्रीयग्रन्थमालायामस्य ग्रन्थस्य प्रकाशनोपक्रमोऽभवत्।

योजनायामस्यां लोकप्रियशास्त्रीयग्रन्थानां प्रकाशनं सङ्कल्पितं विद्यते। तं सङ्कल्पं पुरस्कृत्य सम्प्रति प्रकाश्यमानः सुदर्शनाचार्यविरचितो व्युत्पत्तिवादस्य आदर्शटीकाख्यः ग्रन्थः भवत्करपद्ममलङ्करोति। एषा टीका गदाधरभट्टाचार्यविरचितव्युत्पत्तिवादस्य सर्वासु टीकास्वन्यतमा अतिसरला सुबोधगम्या च वर्तते। आदर्शटीकाख्यः एष ग्रन्थः भागद्वयात्मको वरीवर्ति। अत्र हि प्रथमे भागे एकपदार्थेऽपरपदार्थस्य सम्बन्धविचारः, अभेदान्वयाकाङ्क्षाविचारः, अभेदस्वरूपम्, क्रियाविशेषणानामभेदान्वयाकाङ्क्षायाः स्वरूपम्, अभेदान्वयनियामकः, घटो घटः इत्यत्र शाब्दबोधापत्तिनिरासः, भेदान्वयबोधविचारः, राजपुरुषः इत्यत्र शाब्दबोधाकारः, प्रत्ययप्रत्ययार्थयोः विचारः, एकवचनादिविचारः, संख्यान्वयविचारः, आख्यातस्य संख्यार्थताविचारः, द्वितीयातृतीयाप्रयोजकसिद्धान्तः, गुणादिवाचकपदोत्तरविभक्त्यर्थविचारः,

द्वितीयार्थधात्वर्थयोर्निरूपणादिविषयाणां विवेचनं विद्यते। द्वितीयभागे तृतीयाकारकमारभ्य सप्तमीकारकं यावत् विभक्त्यर्थनिरूपणम्, स्त्रीप्रत्ययार्थविचार:, तद्धितधात्वाख्यातादीनां प्रत्ययानामभिधेयत्वं लडादीनामभिधेयत्वञ्च निरूपितं विद्यते। सर्वस्मिन् प्रकरणे पूर्वपक्षमारभ्य न्यायदिशा सिद्धान्त: सयुक्तिक: न्यरूपि ग्रन्थकारेण। व्युत्पत्तिर्वदतीति व्युत्पत्तिवाद: कर्मण्यण् इत्यनेन अण् प्रत्यये कृते सति अस्य निष्पतिर्भवति। श्रद्धेयबच्चाझामते शब्दाकाङ्क्षाविज्ञानविशेषकार्यकारणभावविज्ञानरूपाया व्युत्पत्ते: अनुकूलेऽन्तरा मतान्तरखण्डनगर्भत्वेऽपि तदुद्देशेनाप्रवृत्ततया जल्पव्यवहारायोग्ये व्युत्पत्ति-तत्त्वबुभुत्सयारम्भणीयत्वेन वादपदव्यवहार:। एकपदार्थानुयोगिकोऽपरपदार्थप्रतियोगिक: संसर्ग आकाङ्क्षाप्रयोज्यसंसर्गत्वाभिन्नशाब्दबोधनिरूपितविषयतावान् भवति। स च संसर्ग: क्वचिद् अभेद:, क्वचिदभेदातिरिक्ता: आधारता, आधेयता, प्रतियोगिता, अनुयोगिता, विषयता, विषयिता, जन्यता, जनकता, समवाय:, संयोगादयश्च भवन्ति। प्रातिपदिकविशिष्टोऽभेद: आकाङ्क्षाप्रयोज्यसांसर्गिकविषयतावान् वैशिष्ट्यञ्च स्वप्रयोज्यविशेष्यताकत्व-स्वविशिष्टपदप्रयोज्यप्रकारताकत्वोभयसम्बन्धेन। पदे स्ववैशिष्ट्यञ्च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वस्वाव्यवहितपूर्व-वर्तित्वान्यतरसम्बन्धेन। प्रातिपदिकपदेन स्वपञ्चकेन च विशेष्यवाचकपदग्रहणम्। नीलो घट: इत्यत्र घटे घटसमानविभक्तिकनीलपदोपस्थापितस्य नीलस्य, नीलघटमित्यत्र घटपदाव्यवहितपूर्ववर्तिनीलपदोपस्थापितस्य नीलस्य च अभेद: संसर्गो भासते। एवं रीत्या व्युत्पत्तिवादस्य टीकाकारै: परिष्कार: क्रियते। पूर्वोक्तादिविषयविवरणावसरे ग्रन्थकारेण अनुसृता सुलभावगमरचनाशैली आदर्शटीकाख्यं ग्रन्थमिममवलोकयतां सुस्पष्टं भवेदिति अलमिति।

श्रीगङ्गाधरशास्त्रिणामन्तेवासिना च पञ्चनदीयेन सुदर्शनाचार्यशास्त्रिणा विरचितामिमामादर्शाख्यां टीकां श्रीमता प्रो. हरेरामत्रिपाठिना सम्पाद्य राष्ट्रियसंस्कृतसंस्थाने ग्रन्थोऽयं समर्पित: तस्मै साधुवादा: समर्प्यन्ते। प्रकाशितया एतया टीकया विद्वांस:, गवेषका:, जिज्ञासव:, दार्शनिका:, वैयाकरणा: छात्राश्चोपकृता: स्युरित्याशासे।

सन्दर्भेऽस्मिन् ग्रन्थकारं संस्मरन्, संशोधकं, मुद्रकं, ग्रन्थप्रकाशनाय विहित-प्रयासान् सर्वाभिनन्दामि।

**–प्रो. राधावल्लभत्रिपाठी**

कुलपति:, राष्ट्रियसंस्कृतसंस्थानम्

# भूमिका

विशिष्टा उत्पत्तिः, व्युत्पत्तिः तस्यार्थः विशिष्ट प्रतिपत्तिः। व्युत्पत्तीनां वादः व्युत्पत्तिवादः। व्युत्पत्तिर्वदतीति व्युत्पत्तिवादः इत्यपि विद्वांसः वदन्ति। व्युत्पत्तये वादः व्युत्पत्तिवाद इत्यपि केचन वदन्ति। बच्चाझामते शब्दाकाखाविज्ञानविशेष-कार्यकारणभावविज्ञानरूपायाः व्युत्पत्तेः जल्पव्यवहारायोग्यव्युत्पत्तितत्त्वबुभुत्सारूपः वादः इति। शाब्दबोधे पदं ज्ञानं करणं भवति पदजन्यपदार्थज्ञानं व्यापारः शाब्दबोधः फलं शक्तिज्ञानं सहकारीकारणञ्च भवति। मीमांसकानां नये भावनामुख्यविशेष्यकः, वैयाकरणानां नये व्यापारमुख्यविशेष्यकः, नैयायिकानां नये तु प्रथमान्तार्थमुख्य-विशेष्यकश्च शाब्दबोधो भवति। नैयायिकानां नये कुत्रचित् निपातार्थमुख्यविशेष्यकः, कुत्रचित् व्यापारमुख्यविशेष्यकः कुत्रचित् कृतिमुख्यविशेष्यकश्च शाब्दबोधः प्रथमान्तपदसमभिव्याहाराभावे भवति। व्युत्पत्तिवादे यद्यपि प्रातिपदिकतदुत्तरप्रत्ययानां धातुतदुत्तरप्रत्ययानामर्थः शाब्दबोधे अन्वयप्रकारश्च न्यायरीत्या निरूपितो विद्यते तथापि कारकाणां प्रधानत्वं तत्रोपलभ्यत इति। क्रियानिमित्तत्वं कारकत्वम्, विभक्त्यर्थद्वारा क्रियान्वयित्वं मुख्यभाक्तसाधारणं कारकत्वम् यद्वा कर्तृत्वकर्मत्वादिषट्कान्यतमद्वारा क्रियान्वयित्वं कारकत्वम्। तत्र क्रियाश्रयत्वं कर्तृत्वम्। कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोजकत्वम् कर्तृत्वम् अथवा अनुकूलकृतिमत्त्वम् कर्तृत्वम्। कर्मकारकस्य पञ्चलक्षणानि उपलभ्यन्ते। करणव्यापार्य्यत्वं कर्मत्वम्, परसमवेतक्रियाजन्यफल शालित्वम् कर्मणः वा लक्षणम्। अथवा तत्तद्धात्वर्थतावच्छेदकफलशालित्वम् तत्तद्धात्वर्थकर्मत्वम्, तत्क्रियानधिकरणत्वे सति तत्क्रियावच्छेदकफलशालित्वम्, परसमवेततत्तद्धात्वर्थान्वयिफलविशेषशालित्वं तत्तद्धात्वर्थकर्मत्वं वेति कर्मणः लक्षणम्। कारकस्य कर्तुः कर्मणश्च स्वरूपं विस्तृतरूपेणेदानीं प्रकाश्यते।

व्याकरणशास्त्रे ये प्रत्ययाः भवन्ति। तेषां विभागः चतुर्विधः प्रतिपादितो जगदीशेन–

**विभक्तिश्चैव धात्वंशस्तद्धितं कृदिति क्रमात्।**
**चतुर्धा प्रत्ययः प्रोक्तः, कादिभिः पञ्चधाऽथवा॥**[१]

तत्र संख्यात्वावान्तरजात्यवच्छिन्नशक्तिमान् यः प्रत्ययः सा विभक्तिरिति सा च सुप्तिङ् चेति भेदाद् द्विविधा भवति। विभक्तेस्स्वरूपं प्रतिपादयन्नाह

जगदीशभट्टाचार्यः–

**प्रकृत्यर्थस्य यः स्वार्थे विधेयत्वेन बोधने।**
**समर्थः सोऽथवा शब्दो विभक्तित्वेन गीयते।।[२]**

यः शब्द स्वार्थे धर्मिणि स्वप्रकृत्यर्थविधेयकान्वयबोधं प्रति समर्थः सः सुबादिविभक्तिरित्युच्यते। यद्वा प्रत्ययार्थधर्मिकप्रकृत्यर्थविधेयकान्वयबोधसमर्थः शब्दो विभक्तिरिति। तत्र सुपः किमिति जिज्ञासायामुच्यते

**प्रकृत्यर्थे स्वार्थसङ्ख्यान्वयधीहेतवः सुपः।**
**प्रथमादिप्रभेदेन ताश्च सप्तविधा मताः।।[३]**

प्रकृत्यर्थधर्मिकस्वार्थसंख्यान्वयबोधिका विभक्तयः सुप उच्यन्ते। ताश्च प्रथमा द्वितीया तृतीया चतुर्थी पञ्चमी षष्ठी सप्तमी चेति भेदात् सप्तविधा भवन्ति।

तत्र धात्वर्थावच्छिन्न तिङर्थस्यान्वयबोधं प्रति यदन्तनामोपस्थाप्यत्वं तन्त्रं तादृशी सुप्सु प्रथमा।[४] अत्र कृष्णकान्तविद्यावागीशेनोच्यते यादृशानुपूर्व्यवच्छिन्न-नामोपस्थाप्यत्वं विशेष्यतासम्बन्धेन धात्वर्थावच्छिन्न तिङर्थप्रकारकान्वयबोधं प्रति स्वरूपसम्बन्धेन प्रयोजकं तादृशानुपूर्वीमच्छब्दत्वं प्रथमात्वमिति।[५] द्वितीयादीनां विभक्तीनां संक्षेपेण स्वरूपं निरूपयन्नाह जगदीशः–

**धातुभेदानुपादाय तदर्थे कर्मतादिकान्।**
**बोधयन्त्यो द्वितीयाद्या निर्वक्तव्या विभक्तयः।।[६]**

तिबन्तपचधातूपस्थाप्यपाकधर्मिककर्मत्वानुभवानुकूलसुप्सजातीयत्वं द्वितीयाविभक्तेर्लक्षणमिति। अर्थात् यादृशानुपूर्वीप्रकारकनिश्चयत्वं तिबन्तपचधातूपस्थाप्यार्थधर्मिक-कर्मत्वप्रकारकान्वयबोधजनकतावच्छेदकं तादृशानुपूर्वीमत्त्वे सति विभक्तित्वं द्वितीयेति।[७] पच्यर्थधर्मिककरणत्वान्वयबोधानुकूलसुप्सजातीयत्वं तृतीयात्वम्।[८] यद्वा यादृशधर्मावच्छिन्नप्रकारकनिश्चयत्वं पच्यर्थधर्मिककरणत्वप्रकारकान्वयबोधजनकतावच्छेदकं तादृशधर्मवत्त्वं तृतीयाविभक्तेर्लक्षणम्। ददात्यर्थदानधर्मिकसम्प्रदानत्वानुभावक-सुप्सजातीयत्वं चतुर्थीत्वम्।[९] अर्थात् दाधातुविशेषोपस्थाप्यदानधर्मिकसम्प्रदानत्व-प्रकारकान्वयबोधजनकतावच्छेदकं यादृशधर्मावच्छिन्ननिश्चयत्वं तादृशधर्मवद्विभक्तित्वमिति चतुर्थीविभक्तेर्लक्षणमिति।

अत्र गोकुलनाथोपाध्यायैरुच्यते–

**ङेभ्याम्भ्यस्चतुर्थी सा सम्प्रदानत्ववाचिका।**
**सम्प्रदानन्तु दानस्य क्रियाया वा फलोपयुक्।।[१०]**

पतधात्वर्थतावच्छेदकरूपावच्छिन्नधर्मिकविभागबोधानुकूलसुप्सजातीयत्वं पञ्चमीत्वमिति।[११] कृष्णभट्टास्तु यादृशानुपूर्वीप्रकारकनिश्चयत्वं पतनत्वावच्छिन्न धर्मिकविभागप्रकारकान्वयबोधजनकतावच्छेदकविभक्तित्वे सति तादृशानुपूर्वीमच्छब्दत्वं पञ्चमीत्वमिति। तिबन्तदाधात्वर्थधर्मिकस्वार्थान्वयबोधस्वरूपायोग्यत्वे सति प्रथमान्यसुप्त्वं षष्ठीत्वमिति। यद्वा यादृशानुपूर्वीप्रकारकनिश्चयत्वं तिबन्तादिधात्वर्थधर्मिकस्वार्थप्रकार-कान्वयबोधजनकतावच्छेदकं प्रथमान्यत्वे सति तादृशानुपूर्वीमत्सुप्त्वं षष्ठी-विभक्तेर्लक्षणम्।[१२] यद्वा हिनस्त्यर्थहिंसाधर्मिकस्वार्थकर्मत्वानुभावकसुप्सजातीयत्वं षष्ठीत्वम्। सम्बन्धसामान्ये स्वत्वे वा शक्ता सुप् षष्ठी। जगदीशभट्टाचार्येण सप्तमीविभक्तेर्लक्षणद्वयमुक्तम्–

[१३]पचधात्वर्थतावच्छेदकरूपावच्छिन्नधर्मिकस्वार्थाधेयत्वबोधानुकूलसुप्तसजातीयत्वं सप्तमीत्वम्। अर्थात् यादृशानुपूर्वीप्रकारकनिश्चयत्वं रूपादिपरावृत्तिफलजनकतेजःसंयोगा-वच्छिन्नक्रियात्वावच्छिन्न विशेष्यकस्वार्थाधेयत्वप्रकारकान्वयबोधजनकतावच्छेदकं सुप्त्वे सति तादृशानुपूर्वीमत्त्वं सप्तमीत्वम्।[१४] अधिकरणतायामाधेयत्वे वा शक्ता सुप् सप्तमी। चैत्रधर्मिक स्वार्थाधिकरणत्वान्वयबोधकसुप्समानानुपूर्वीकत्वं वा सप्तमीत्वमिति अपि केचिद् वदन्ति।

सुपो विभागो द्विविधोऽपि भवति। शक्त्या कारकस्य बोधिका तदन्यस्य च बोधिका सुपिति। अत एव जगदीशभट्टाचार्य आह–

**कारकार्थेतरार्था च सुप् द्विधा च विभज्यते।**
**धात्वर्थांशे प्रकारो यः सुबर्थः सोऽत्र कारकम्।।**[१५]

यद्धातूपस्थाप्य यादृशार्थेऽन्वयप्रकारीभूय भासते यः सुबर्थः स तद्धातूपस्थाप्य तादृशक्रियायां कारकमिति जगदीशभट्टाचार्यः। षष्ठ्यर्थस्तु सम्बन्धो न धात्वर्थे प्रकारीभूय भासते अतः सम्बन्धो न कारकमिति। अत एव–

**क्रियाप्रकारीभूतोऽर्थः कारकं तच्च षड्विधम्।**
**कर्तृकर्मादिभेदेन शेषः सम्बन्ध इष्यते।।**

क्रियानिमित्तत्वं कारकत्वमिति केचित्। तन्न चैत्रस्य तण्डुलं पचति इत्यत्र सम्बन्धिनि चैत्रादौ अतिव्याप्तेः, अनुमतिप्रकाशनद्वारा सम्प्रदानादेरिव तण्डुलादि-सम्पादनद्वारा सम्बन्धिनोऽपि पाकादिक्रियानिमित्तत्वात्, किन्तु क्रियान्वितविभक्त्यर्थान्वि-तत्वं कारकत्वमिति। अस्ति च कर्तृकर्मादेः क्रियान्विततिङ्सुब्विभक्त्यर्थान्वयः न तूदाहृते सम्बन्धिनि, षष्ठ्यर्थसम्बन्धस्य तण्डुलादिनामार्थान्विततया क्रियानन्वितत्वादिति जयरामभट्टाचार्यः। यादृशेन नामार्थेनावच्छिन्नस्य सुबर्थस्य यादृशधात्वर्थेऽन्वयः स

एव तादृशधात्वर्थे कारकतया व्यपदिश्यत इत्यपि जगदीशभट्टाचार्याः वदन्तीति।

भवानन्दविरचिते कारकचक्रे कारकस्य लक्षणत्रयमुपलभ्यते।

१. क्रियानिमित्तत्वं कारकत्वम्।

२. विभक्त्यद्वारा क्रियान्वयित्वं मुख्यभाक्तसाधारणं कारकत्वम्

३. कर्तृत्वकर्मत्वादिषट्कान्यतमद्वाराक्रियान्वयित्वं कारकत्वमिति। तत्र यः क्रियानिमित्तत्वं कारत्वमिति लक्षणं नैयायिकेनोद्योतकरेण कलापव्याकरणस्य वृत्तिकारेण दुर्गसिंहेन, वाचस्पतिमिश्रेण, शृङ्गारप्रकाशस्य प्रणेत्रा च स्वीकृतम्। तेषां वाक्यानि इत्थं सन्ति।

१. महर्षिणोद्योतकरेणोक्तं न्यायवार्तिके–"सामान्यञ्च कारकाणां क्रियानिमित्तत्वम्[१६]"

२. दुर्गसिंहः कलापव्याकरणस्य वृत्तिटीकायाम्–

"क्रियानिमित्तं कारकं लोकतः सिद्धम्"[१७]

३. वाचस्पतिमिश्रः न्यायवार्तिकतात्पर्यटीकायाम्

"क्रियानिमित्तस्य च कारकत्वात्"[१८]

४. भोजराजः शृङ्गारप्रकाशे– "क्रियानिमित्तं कारकम्"[१९]

क्रियानिमित्तत्वमित्यत्र क्रियापदार्थः धातुजन्योऽर्थः क्रियेति। धात्वर्थविषये वैयाकरणेषु मतद्वयं वर्तत इति। फलावच्छिन्नव्यापारे एव धातोर्शक्तिरित्य-खण्डशक्तिवादिनां मतमिति। सखण्डशक्तिवादिनां नये तु धातोः फले व्यापारे च पृथग् पृथग् शक्तिरिति। अखण्डशक्तिवादिनां नये तु कर्तृवाच्यप्रयोगस्थले फलावच्छिन्नव्यापारे धातोरेकैव शक्तिर्भवतीति। इदं मतं नागेशः स्वीकरोति। फलावच्छिन्नव्यापारे धातोर्शक्तिरिति ये स्वीकुर्वन्ति। तेषां नये ग्रामं गच्छति इत्यत्र गम्धात्वर्थः संयोगावच्छिन्नव्यापारः (संयोगजनको व्यापारः) स च ग्रामे नास्ति। अतस्तत्र कारकलक्षणस्याव्याप्तिर्न दर्शयितुं शक्यत इति। परन्तु गम्धात्वर्थता-वच्छेदकस्योत्तरदेशसंयोगस्य सिद्धौ ग्रामः कारणं भवत्येव। अतः प्रकृतकारकलक्षणस्य ग्रामे समन्वयो भवतीति।

धात्वर्थः फलं व्यापारश्च पृथग् पृथगिति अर्थाद् धातोर्शक्तिः फले व्यापारे चेति। अस्य मतस्योपस्थापनं कुर्वन्नाह नागेशभट्टः।

"फलव्यापारयोः पृथक् शक्तिः"[२०] अत्र श्रीमद्दुर्बलाचार्यैरुच्यते–

"फलावच्छिन्नव्यापारस्य धात्वर्थत्वे विशेष्यविशेषणभावे विनिगमनाविरहाद् अवच्छेदकगौरवमेकदेशान्वयापत्तिश्च।"[२१] भट्टोजीदीक्षित इदं मतमेव स्वीकरोति। अस्मिन् मते गम्धात्वर्थ उत्तरदेशसंयोगः पादप्रक्षेपादिस्वरूपा क्रिया च। "ग्रामं गच्छतीत्यत्र ग्रामः संयोगस्वरूपस्य धात्वर्थस्य सिद्धौ कारणं वर्तत इत्यस्माद्धेतोः कारकलक्षणस्य सङ्गतिर्भवति। प्रकृतकारकलक्षणस्य तात्पर्यमिदं ज्ञातव्यं यत् साक्षाद् वा परम्परया सम्बन्धेन क्रियायाः निष्पत्तौ यत् कारणं भवति तदेव कारकमिति।

अत एव कारकचक्रस्य माधवीटीकायामुक्तम्–

"क्रियाकारणत्वं साक्षात्परम्परासाधारणप्रयोजकत्वमेव"[२३] इति। तथाच "ब्राह्मणाय गां ददाति" इत्यत्र "ब्राह्मणः" सम्प्रदानकारकमिति दानदाता यदा पृच्छति "तुभ्यं गां ददानि" तदा ब्राह्मणः "ददस्व"[२४] इत्युक्त्वा स्वीकृतिं ददाति। तदनन्तरं दानक्रियां प्रति कारणं स भवति। दानव्यापारस्य स साक्षात्कारणं नास्ति अपितु परम्परया कारणमिति। अनुमतिं प्रदायैव दानव्यापारसिद्धौ कारणत्वमिति। एवञ्च परम्परया सम्बन्धेन धात्वर्थव्यापारं प्रति कारणत्वात्तस्यैव सम्प्रदानसंज्ञा भवतीति।

वृक्षात् पर्णं पतति इत्यत्र वृक्षस्यापादानकारकत्वमिति। पर्णे या पतनक्रिया भवति। तस्याः वृक्षपर्णयोः संयोगम् अवरुणद्धि। तस्य संयोगस्य नाशं विभागक्रिया करोति। ततः पर्णस्य पतनं भवति। तथाच पतनक्रियायाः निष्पत्तौ पर्णं साक्षात्सम्बन्धेन कारणं भवति। परन्तु वृक्षस्य पतनप्रतिबन्धकसंयोगनाशकविभागद्वारा पतनक्रिया-निमित्तत्वमिति। यतोहि वृक्षे पतनप्रतिबन्धकसंयोगनाशकविभागानुकूला क्रिया यावत् न भवति तावत् पर्णस्य पतनक्रियायाः निष्पत्तिर्न भवति। तथाच प्रकृतकारकलक्षणस्य वृक्षे सत्त्वात् भवति लक्षणसमन्वयः।

भवानन्दतर्कवागीशनये क्रियानिमित्तत्वमिति[२५] लक्षणं न समीचीनमिति यतोहि क्रियायाः सिद्धौ परम्परासम्बन्धेन यत् कारणं भवति तत् कारकमिति रीत्या सम्बन्धिनि कारकत्वस्य प्रसक्त्यापत्तिः। यथा "देवदत्तः चैत्रस्य तण्डुलं पचति इत्यत्र पाकक्रियायाः निष्पत्तौ देवदत्तः तण्डुलश्चैव साक्षात्सम्बन्धेन कारणं भवति। देवदत्तस्य पाकक्रियायै अग्नेः प्रज्वलनं स्थाल्यां जलस्य तण्डुलस्य च निक्षेपव्यापारादयः, तण्डुले विक्लितिव्यापारश्च भवन्ति। चैत्रः क्षेत्रे कर्षणादिकार्यं सम्पाद्य तण्डुलान् उत्पादयति। स च पाकं न करोति। तण्डुलान् उत्पाद्य पाकाय स यज्ञदत्तं ददाति। स च परम्परासम्बन्धेन पाकं प्रति कारणं भवत्येव। अतः सम्प्रदानस्यापादानस्येव च परम्परासम्बन्धेन पाकं प्रति चैत्रस्य निमित्तत्वात्तत्रातिव्याप्तिर्दुर्वारैव। वैयाकरणास्तु "सम्बन्धिनि कारकत्वं नाभ्युपगच्छन्ति। यतोहि सम्बन्धिनः क्रियया सह नान्वयोऽपि

तु नामार्थेन सह अन्वयो भवति। अतः उक्तकारकलक्षणस्य षष्ठ्यर्थस्य सम्बन्धस्य प्रतिपादिका या षष्ठीविभक्तिर्तत्रैवातिव्याप्तिर्दुवारैवेति।[२६]

अत एव नैयायिको जयराम आह–

"कारकत्वं नाम न क्रियानिमित्तत्वम्।[२७]" चैत्रस्य तण्डुलं पचतीत्यादौ सम्बन्धिनि चैत्रादावतिव्याप्तेः।" एवं जयकृष्णतर्कालङ्कारोऽपि वदति "क्रियानिमित्तत्वं कारकत्वमिति वैयाकरणाः।[२८] तन्न मैत्रस्य तण्डुलं पचतीत्यादौ सम्बन्धिनि मैत्रे कारकत्वापत्तिः।" यथा भवानन्दतर्कवागीशः उक्तकारकलक्षणस्य खण्डनं करोति तथैव नागेशः मीमांसकः गागाभट्टश्चापि[२९] निराकुरुतः तस्य कारकलक्षणम्।

वस्तुतः भवानन्दतर्कवागीशनये तु विभक्त्यर्थद्वारा क्रियान्वयित्वं मुख्यभाक्तसाधारणं कारकत्वमिति।[३०] उक्तकारकलक्षणस्य तात्पर्यन्तु यः नामार्थो विभक्त्यर्थद्वारा क्रियायां साक्षात्परम्परया वान्वितो भवति तत्कारकमिति। लक्षणे विभक्त्यर्थस्याभिप्रायस्तु सुब्विभक्तेरर्थः वा तिङ्विभक्तेरर्थः। कर्तृवाच्यस्थले सुप्विभक्तिप्रथमार्थे आश्रयत्वम् तिङ्विभक्त्यर्थः कृतिश्च उक्तविभक्त्यर्थयोः माध्यमेन यः क्रियायामन्वितो भवति तदेव कारकत्वमिति। यथा चैत्रः पचतीत्यत्र चैत्रपदोत्तरं यत् सुप् (सु) विभक्तिर्तस्यार्थ एकत्वम्, पच्पदोत्तरतिप्रत्ययार्थः कृतिः उक्तयोः विभक्त्यर्थयोः द्वारा चैत्रस्य पाकक्रियायामन्वयो भवतीति। अत एव चैत्रे प्रकृतकारणलक्षणस्य समन्वयो भवतीति। कर्मवाच्यस्थले "चैत्रेण तण्डुलः पच्यते" इत्यत्र चैत्रपदोत्तरतृतीयाविभक्त्यर्थः कृतिः।[३१] विभक्त्यर्थकृतिद्वारा पाकक्रियायां चैत्रस्यान्वयात् चैत्रे कारकलक्षणस्य समन्वयो भवति। अत्र शाब्दबोधस्याकारस्तु चैत्रनिष्ठकृतिनिरूपकपाकजन्यविक्लित्याश्रयः वर्तमानकालिकः एकत्ववान् तण्डुलः इति। चैत्रः तण्डुलं पचतीत्यत्र तण्डुलस्य पाकक्रियायां द्वितीयार्थकर्मत्वद्वारा अन्वयो भवत्येव अत एव तण्डुलस्य कारकत्वमिति। अत्र शाब्दबोधस्तु तण्डुलनिष्ठकर्मत्वनिरूपक विक्लितिजनकपाकानुकूलकृत्याश्रयः[३२] वर्तमानकालिकः एकत्ववान् चैत्र इति कुठारेण छिनत्ति इत्यत्र कुठारस्य छेदनक्रियाया तृतीयाविभक्त्यर्थकरणत्वेनैवान्वयो जायत इति। विप्राय गां ददाति इत्यत्र विप्रस्य (सम्प्रदानस्य) दानक्रियायामन्वयः चतुर्थ्यर्थस्य सम्प्रदानत्वस्य चोद्देश्यत्वस्य परम्परया भवति। तथाच विप्रस्यापि कारकत्वं सम्भवति। वृक्षात् पर्णं पततीत्यत्र वृक्षेऽपि कारकत्वं सम्भवति। अत्र पञ्चम्यर्थस्य अपादानत्वस्य वावधित्वस्य माध्यमेन वृक्षस्य पतनक्रियायामन्वयो भवत्येवेति कारकलक्षणस्य सङ्गतिरिति। गृहे चैत्रः स्थाल्यामोदनं पचतीत्यत्र गृहम् स्थाली च परम्परासम्बन्धेन पाकक्रियायामन्वितो भवति। तत्र सप्तम्यर्थः आधारत्वमिति। चैत्रकर्तुः आधारं गृहमोदनरूपकर्मत्वस्य आधारः स्थाली च वर्तते। अत एवात्र गृहं स्थाली च कारकमिति। भवानन्देन यत्कारकस्य लक्षणं

स्वीकृतं तत्तु मुख्यभाक्तकारकयोः सङ्गतं भवति। विभक्त्यर्थद्वारा क्रियायामन्वितत्वे सति धात्वर्थस्य क्रियायां सिद्धौ साक्षात् वा परम्परया यत्कारणं भवति तत्तु मुख्यं कारकमिति। यथा ग्रामं गच्छतीत्यत्र ग्राममुख्यं कारकमिति। यतोहि द्वितीयार्थः कर्मत्वं, तेन माध्यमेन गमने तस्यान्वयो भवति एवञ्च उत्तरदेशसंयोगरूपस्य फलस्य आश्रयत्वेन गमनक्रियासिद्धौ परम्परया कारणञ्च भवति। क्रियायाः सिद्धौ साक्षात् वा परम्परया यत्कारणं न भवति अपितु केवलविभक्त्यर्थद्वारा क्रियान्वितो भवति तत्तु गौणकारकमिति। यथा घटं जानाति[३३] चैत्रः इत्यत्र घटस्य गौणकारकत्वम्। अत्र ज्ञाधातुः सविषयकस्य वाचको भवति। अत्र द्वितीयार्थः विषयता, सा च घटपदार्थे तिष्ठति।

अतः जानाति क्रियापदान्वयः घटपदार्थे द्वितीयार्थविषयतासम्बन्धेन भवति। कर्मत्वविवेचनस्य स्थले भवानन्देनोक्तं–क्रियायाः सिद्धौ वा परम्परया कारणत्वे सति क्रियाजन्यफलाश्रयत्वमेव मुख्यकर्मकारकत्वमिति। मुख्यगौणकारकयोः लक्षणमनेन रूपेण वक्तुं शक्यते–

"क्रिया निमित्तत्वे सति विभक्त्यर्थद्वारा क्रियान्वयित्वं मुख्यकारकत्वम्"[३४] अर्थात् क्रियायाः साक्षात् वा परम्परया प्रयोजकत्वे सति सुब्विभक्तिद्वारा वा तिङ्विभक्तिद्वारा क्रियान्वयित्वं मुख्यकारकत्वमिति।

"क्रियाया अनिमितत्त्वे सति विभक्त्यर्थद्वारा क्रियान्वयित्वं भाक्तकारक-त्वमिति"[३५] अर्थात् क्रियायाः साक्षाद् वा परम्परया यः प्रयोजको न भवति परन्तु विभक्त्यर्थद्वारा यस्य क्रियायामन्वयो भवति तत् गौणकारकमिति।

प्रकृतकारकलक्षणस्य "चैत्रस्य पचति इत्यत्र षष्ठ्यन्तपदं "चैत्रस्य" इत्यस्य पाकक्रियायामन्वयात् तत्रातिव्याप्तिरिति चेन्न भवानन्देनोच्यते "चैत्रस्य पचति इत्यत्र षष्ठ्यर्थः सम्बन्धित्वं तस्य पाकक्रियायामन्वयो न भवति अपितु षष्ठ्यन्तपदस्य प्रातिपदिकार्थेन सह आकाङ्क्षा भवति। उक्तकारकलक्षणस्य परिष्कारं कुर्वन्नाह भवानन्दतर्कवागीशः–

कर्तृत्वकर्मत्वादिषट्कान्यतमद्वाराक्रियान्वयित्वं कारकत्वमि[३६] ति तत्रानुकूलकृतित्वं कर्तृत्वम्।[३७] यथा चैत्रः पचति इत्यत्र पाकानुकूलकृतिमत्त्वस्य चैत्रे सत्त्वात् भवति लक्षणसमन्वयः। तत्तद्धात्वर्थतावच्छेदकफलशालित्वं [३८]तत्तद्धात्वर्थकर्मत्वमिति भवानन्देन उक्तम्। रघुनाथशिरोमणिना तु "धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति। परसमवेतक्रियाजन्यफलशालित्वमपि[३९] कर्मणः लक्षणमिति। कारकान्तरेऽचरितार्थत्वे सति हेतुत्वं करणस्य[४०] लक्षणम् यद्वा फलयोगव्यवच्छिन्नकारणत्वं करणत्वमिति। भवानन्दतर्कवागीशनये व्यापारवत्कारण[४१]

करणस्य लक्षणमिति। कारकत्वे सति कर्तृव्यापारविषयत्वं करणत्वमित्यपि केचित् वदन्ति। तत्क्रियाकारणीभूतकर्मजन्यफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति।[४२] यद्वा अदृष्टाद्वारकतत्क्रियाकारणीभूतकर्मजन्यफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति। तत्क्रियाकारणीभूतकर्मजन्यधात्वर्थतावच्छेदकफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमित्यपि केचित् वदन्ति। भवानन्दतर्कवागीशेनापादानस्य लक्षणद्वयं प्रदर्शितं कारकचक्र इति। परकीयक्रियाजन्यविभागाश्रयत्वमपादानत्वम्[४३] वा विभागावधित्वमपादानत्वमिति।[४४] अधिकरणस्यापि अनेकानि लक्षणानि सन्ति। कर्तृकर्मान्यतरद्वारा क्रियाश्रयत्वे सति तत्क्रियोपकारकत्वम् अधिकरणस्य लक्षणम्। भवानन्दतर्कवागीशनये परम्परया क्रियाश्रयत्वम् अधिकरणस्य लक्षणम्। प्राचीनमते सप्तम्यर्थः अधिकरणत्वं परन्तु नव्यमते सप्तम्यर्थः आधेयत्वमिति।

एकद्वित्र्यादिविशिष्टार्थशक्तिमान् प्रत्ययो विभक्तिरिति। यद्वा यः शब्दः स्वार्थे धर्मिणि स्वप्रकृत्यर्थविधेयकान्वयबोधं प्रति समर्थः सा सुबादिविभक्ति इत्युच्यते। वा प्रत्ययार्थधर्मिककृत्यर्थविधेयकान्वयबोधसमर्थः शब्दो विभक्तिरिति। तत्र सुब्विभक्तिः प्रथमादिभेदेन सप्तधा। प्रथमाविभक्तिस्तु यादृशानुपूर्व्यवच्छिन्ननामोपस्थाप्यत्वं विशेष्यतासम्बन्धेन धात्वर्थावच्छिन्नतिङर्थप्रकारकान्वयबोधं प्रति स्वरूपसम्बन्धेन प्रयोजकं तादृशानुपूर्वीमच्छब्दत्वमिति। यथा 'चैत्रः गच्छती'त्यत्र चैत्रानुपूर्व्यवच्छिन्ननामोस्थाप्यत्वं विशेष्यतासम्बन्धेन धात्वर्थगमनावच्छिन्नतिङर्थकृतिप्रकारकान्वयबोधं प्रति स्वरूपसम्बन्धेन प्रयोजकं तादृशचैत्रस्वरूपानुपूर्वीमच्छब्दत्वं प्रथमेति। गोकुलनाथोपाध्यैरुच्यते–

**विभक्तिः प्रथमा तेषु स्वौजसः प्रत्ययास्त्रयः।**
**आभिमुख्यं तदर्थस्तदभीष्टप्रत्ययात्मकम्।।**[४६]

महर्षिणा पाणिनिना उक्तम्–

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा**[४६]

अत्र भट्टोजीदीक्षित आह – नियतोपस्थितिकः प्रातिपदिकार्थः, मात्रशब्दस्य प्रत्येकं योगः। प्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात्।

पदं पदं प्रति इत्यर्थेऽव्ययीभावः। पदपदञ्चात्र प्रातिपदिकसंज्ञानिष्ठविधेयता निरूपितोद्देश्यतावच्छेदकधर्मवत्परम्। उद्देश्यतावच्छेदकधर्मश्च धातुप्रत्ययप्रत्ययान्त-भिन्नार्थवत्त्वकृदन्ततदादित्वतद्धितान्ततदादित्वसमासत्वैतदन्यतमरूपः। तथाच प्रतिपदमुद्देश्यतया लब्धुमर्हति यत्तत्प्रातिपदिकम्। अर्थ्यते=बुध्यते इत्यर्थः, प्रातिपदिकस्य अर्थः इति प्रातिपदिकार्थः अर्थात् प्रातिपदिकजन्यबोधविषय इति। प्रातिपदिकस्य लिङ्गं संख्या चार्थः। प्रातिपदिकनिष्ठशक्तिविशिष्टत्वं प्रातिपदिकार्थत्वम्। वैशिष्ट्यञ्च

स्वजन्यबोधविषयत्वप्रकारकतात्पर्यविषयतापर्याप्त्यधिकरणत्वस्वविशिष्टत्वैतदुभय-सम्बन्धेन, सम्बन्धघटकशक्तिवैशिष्ट्यञ्च स्वप्रयोज्यधर्मितानिरूपिता पदार्थसम्बन्धाव-च्छिन्नप्रकारतावत्त्व-स्वविशिष्टावच्छेदकतावद् विषयतावत्त्वैतदुभयसम्बन्धावच्छिन्न-प्रतियोगिताकस्वाभाववत्त्वस्वप्रयोज्यबोधविषयत्वप्रकारकतात्पर्यविषयत्वैतदुभयसम्बन्धेन।

सूत्रे मात्रशब्दः अवधारणे। अवधारणञ्चान्ययोगव्यवच्छेदः। तथाचोक्तार्थे प्रथमाविभक्तिर्भवति। उक्ते कर्तरि प्रथमाविभक्तिर्भवतीति। तत्र जिज्ञासा जायते कः कर्त्ता? उच्यते पाणिनिना–

**स्वतन्त्रः कर्त्ता**[47]

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्त्ता स्यात् इति भट्टोजीदीक्षितः। स्वम्=आत्मा तन्त्रम्=प्रधानमस्य इति स्वतन्त्रः।

स्वतन्त्रस्य पञ्च नामानि अधोलिखितानि सन्ति। "स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः"।[48] स्वतन्त्रघटकतन्त्रशब्दार्थः इत्थं वदन्ति सभापतिशर्मोपाध्यायाः। तननं तन्त्रम्[49], तन्यतेऽनेन वा तन्त्रम्। तन्त्रणं तन्त्र्यते वा तन्त्रम्। एवञ्च अन्यानधीनत्वरूपप्रधानार्थकस्वतन्त्रशब्दः। अत्र कारकाधिकारात् क्रियाजनने स्वतन्त्रः। उक्तवाक्यस्य तात्पर्यमिदं विद्यते कर्मादिकारकाणां क्रियाजनने न स्वातन्त्र्यम्, कर्तृव्यापारतन्त्रत्वात् देवदत्तः तण्डुलं पचति इत्यत्र देवदत्तः फूत्कारादिव्यापारं विधत्ते तदैव "समवायेन विक्लितिं प्रति तादात्म्येन तण्डुलः कारणं भवति इति चैत्रव्यापारजन्यायां पच्धात्वर्थविक्लितौ ज्ञानविषयीभवनमेव व्यापारः इति कर्मकारकनिष्ठाक्रियायाः पारतन्त्र्यम्। एवं करणं, सम्प्रदानमापादानमधिकरणनिष्ठा-क्रियायाः पारतन्त्र्यं बोध्यमिति। स्वार्थकारकाप्रयोज्यं यत्स्वार्थनिरूपितकारकत्वं तदाश्रयत्वसम्बन्धेन धातुविशिष्टः।[50] कारकमात्रवृत्तिक्रियाजनकत्वस्वरूपकारकत्वस्य कर्तृरूपतथाविधकारकप्रयोज्यत्वमिति। नागेशमते स्वातन्त्र्यञ्च[51] कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वमिति। सभापतिशर्मोपाध्यायनये कर्तृत्वस्य लक्षणन्तु–

"धातुनिष्ठशक्तिविशिष्टार्थाश्रयत्वम्[52], अर्थे शक्तिवैशिष्ट्यञ्च स्वज्ञान-प्रयोज्यशाब्दबोधीयानुकूलत्वसम्बन्धावच्छिन्नप्रकारतात्वावच्छिन्नप्रतियोगिता-काभाववत्त्व-स्वज्ञानीयविषयताश्रयत्वैतदुभयसम्बन्धेन। प्रतियोगिता च स्वाश्रयत्व-स्वावच्छेदकताश्रयत्वान्यतरसम्बन्धावच्छिन्ना ग्राह्या। बालकृष्णपञ्चोलीमते कर्त्ता त्रिविधो भवति।[53] शुद्धः प्रयोजको हेतुः कर्मकर्ता च। 'मया हरिः सेव्यते' इत्यत्र शुद्धकर्ता वर्तते। 'कार्यते हरिणा' इत्यत्र प्रयोजको हेतुः कर्ता वर्तते। 'गमयति कृष्णं गोकुलम्' इत्यत्र कर्मकर्ता वर्तते। शुद्धत्वं नाम हेतुत्वानाश्रयत्वे सति सामानाधिकरण्येन

कर्मत्वविशिष्टकर्तृत्वानधिकरणत्वरूपमिति। कर्तृकारकस्य स्वरूपं प्रतिपादयन्नाह जगदीशः–

**तिङा विकरणात्तस्य धातोरर्थस्तु यादृशः।**
**स्वार्थे यादृशि बोध्यस्तत् कर्तृत्वं तदिहोच्यते॥[54]**

सविकरणेन यद्धातुनोपस्थाप्यो यादृशार्थस्तदुत्तरतिङा स्वोपस्थाप्ययादृशार्थेऽनु-भावयितुं शक्यस्तद्धातूपस्थाप्यस्य तस्य तदेव कर्तृत्वं कारकमिति। तत्तत्क्रियानु-कूलकृतिमत्त्वं[55] तत्तत् क्रियाकर्तृत्वम् अनुकूलकृतिमत्त्वं वा कर्तृत्वमिति। व्याकरणदृष्ट्या क्रियायाः निष्पत्तेः यः स्वतन्त्रो भवति स च कर्त्ता इति। स्वतन्त्रशब्दस्यार्थः प्रधानमिति पतञ्जलिः। काशिकाकारोऽपि वदति "स्वतन्त्रः इति प्रधानभूत उच्यते। अगुणभूतो यः क्रियासिद्धौ स्वातन्त्र्येण विवक्ष्यते तत्कारकं कर्तृसंज्ञं भवति।"[56] पुरुषोत्तमदेवः, भट्टोजिदीक्षितश्च उक्तलक्षणस्यैव समर्थनं कुरुतः। यः कर्ता कञ्चिदन्यं कर्तारं क्रियायां प्रवृत्तं करोति स च प्रयोजककर्त्ता इति पाणिनिः। यथा– देवदत्तः ग्रामं चैत्रं गमयति। अत्र देवदत्तः चैत्रं ग्रामं नेतुं प्रेरयति। अत एव देवदत्तः प्रयोजककर्ता इति। यस्मिन् कारके क्रियायाः निष्पत्तौ स्वातन्त्र्यं वर्तते स च कर्त्तेति वैयाकरणाः वदन्ति। अर्वाचीनवैयाकरणा स्वातन्त्र्यस्य स्वरूपं परिष्कृतवन्तः। भट्टोजिदीक्षितानुसारं "प्रधानीभूतधात्वर्थं प्रति आश्रयत्वं स्वातन्त्र्यम्"।[57] यथा देवदत्तो गच्छति इत्यत्र गम्-धातोरर्थः उत्तरदेशसंयोगानुकूलव्यापारः, तदाश्रयः देवदत्तः। अतः गमनक्रियायां देवदत्तस्य स्वातन्त्र्यात् तस्य कर्तृसंज्ञा भवति। कर्मवाच्यस्थले अस्य लक्षणस्य सदोषत्वं दुर्वारैवेति। कर्मवाच्यस्थले धातोः प्रधानमर्थः न व्यापार अपितु फलमिति। यथा "यज्ञदत्तेन पक्वस्तण्डुलः" अत्र धात्वर्थः विक्लितिः। विक्लित्याश्रयत्वात् तण्डुलस्यात्र कर्मसंज्ञा भवति। धात्वर्थाश्रयत्वात् तण्डुले कर्तृलक्षणस्यातिव्याप्तिः सम्भवति। वैयाकरणसिद्धान्तकौमुद्याः टीकाकारः वासुदेवदीक्षितः, कौण्डभट्टश्चापि उक्तलक्षणमेव स्वीकृतवन्तौ। नागेशभट्टस्तु "कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वं स्वातन्त्र्यमिति[58] उक्तवान्। अर्थात् कर्तृप्रत्यययुक्तस्य तिङन्तपदस्य प्रयोगस्थले धात्वर्थाश्रयत्वमेव स्वातन्त्र्यमिति। यथा– 'देवदत्तः तण्डुलं पचति' इत्यत्र कर्तृवाच्यस्य प्रयोगस्थले पच्धात्वर्थः विक्लित्तिजनकव्यापारः तस्याश्रयः देवदत्त इति। अत्र पच्-धातुतः कर्तरि शप्विकरणसहिततिप्प्रत्ययो भवति। अतः पाकक्रियायां स्वतन्त्रो देवदत्तो वर्तत इति। 'देवदत्तेन तण्डुलः पच्यत' इत्यत्र कर्मवाच्यस्थले पच्धात्वर्थः व्यापारजन्यविक्लितः तदाश्रयः तण्डुलः। अत्र पच्धातूत्तरकर्मवाच्ये यगा सह त-प्रत्ययो वर्तते। अतः पच्-धातुना सह कर्तृप्रत्ययस्याभावात् धात्वर्थाश्रयस्य तण्डुलस्य स्वतन्त्राभावात् न कर्तृसंज्ञेति। वैयाकरणानां नये विवक्षाधीनानि कारकाणि भवन्ति। अत एव सभापतिशर्मोपाध्याय आह–

विवक्षाधीनत्वं कारकाणाम् 'स्थाली पचति' 'स्थाल्या पचति' "स्थाल्यां पचति" इति प्रयोगदर्शनात्।[59]

**धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यत।**
**स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः।।[60]**

कारकत्वं तद्व्याप्यकर्तृत्वादिषट्कञ्च न नियतं किन्तु वैवक्षिकम्। अत एव धात्वर्थव्यापाराश्रयत्वेन विवक्षितः कर्ता। यद्धातूपात्तक्रियायां यदा यस्य स्वातन्त्र्यं विवक्ष्यते तदा तत्क्रियायां स कर्त्तेति।

तथा च यस्मिन् कारके क्रियायाः निष्पत्तिं प्रति स्वातन्त्र्यं वर्तते तस्यैव कर्तृसंज्ञा भवति। कारकचक्रे भवानन्दतर्कवागीशेन लक्षणत्रयं निरूपितम्। तत्राद्य लक्षणद्वयं पूर्वपक्षरूपेणोद्धृतं तृतीयञ्च लक्षणं सिद्धान्तभूतमिति। तानि लक्षणानि निम्नोक्तानि सन्ति।

1. क्रियाश्रयत्वम् कर्तृत्वम्।[61]
2. कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोजकत्वं कर्तृत्वम्।[62]
3. अनुकूलकृतिमत्त्वम् कर्तृत्वम्।[63]

क्रियाश्रयत्वं कर्तृत्वमित्यत्र यस्मिन् कारके क्रिया आश्रितत्वेन तिष्ठति स च कर्त्तेति। इदं लक्षणं वैयाकरणाः स्वीकुर्वन्तीति भवानन्दः स्वीकरोति। कारकचक्रस्य पाण्डुलिपौ[64] एका टिप्पणी विद्यते। तेन ज्ञातं भवति यद् वैयाकरणः कर्त्तृपदं यौगिकं स्वीकरोति इति केचन वदन्ति। तस्मिन् मते कृधात्वर्थः क्रिया वा व्यापारः। नागेशमते उत्पत्तिस्वरूपफलाश्रयेन[65] भिन्नाश्रयवती क्रिया कृधात्वर्थः वा उत्पत्त्यनुकूल-व्यापार इति।

नागेशमते कर्तृवाच्ये कर्मवाच्ये वा यः कृत्प्रत्ययो भवति तस्यार्थः आश्रयत्वमिति। तथा च कृधातुतः तृच्प्रत्यययोगे सति निष्पन्नोऽयं कर्तृपदं क्रियाश्रयार्थकमिति। अस्य मतस्योल्लेखं कुर्वन्नाह जयरामः–

वैयाकरणास्तु "अनभिहिते कर्तरि" इत्यनुशासनादचेतनेऽपि कर्तृपदप्रयोगात् क्रियाश्रयत्वमेव कर्तृत्वम्।[66] अर्वाचीनवैयाकरणास्तु कर्तुः स्वरूपमनेन रूपेण प्रतिपादितवन्त इति।

(क) धातूपात्तव्यापाराश्रयः कर्त्ता।[67]
(ख) व्यापाराश्रयः कर्त्ता।[68]
(ग) प्रकृतधातुवाच्यव्यापाराश्रयत्वं कर्तृत्वमिति।[69]

क्रियाश्रयत्वं कर्तृत्वमित्यत्र कालेऽतिव्याप्तिस्सम्भवति। यतोहि "जगतामाश्रयः कालः तर्हि क्रियाया अपि आश्रयः काल इति। उक्तातिव्याप्तिवारणाय कविराजदूषेण उक्तलक्षणे प्राधान्येनेत्यस्य निवेशो क्रियते। तथाच धात्वर्थस्य व्यापारस्य मुख्यरूपेण यः आश्रयो भवति स च कर्ता इति। एवञ्च 'गोपालः गच्छति' इत्यत्र गम्धात्वर्थस्य गमनस्य वा उत्तरदेशसंयोगानुकूलव्यापारस्य मुख्याश्रयः गोपालः एव वर्तत इति न तु कालः। यथा धात्वर्थस्याश्रयः कर्त्ता भवति, तथैव कर्म अधिकरणञ्च तत्रातिव्याप्तिर्दुर्वारैवेति। 'देवदत्तः तण्डुलं पचती'त्यत्र पाकक्रिया तण्डुलकर्मण्यपि जायते। अतः पाकव्यापाराश्रयत्वात् तण्डुलस्यापि कर्तृत्वं स्यादिति।

एवं 'यज्ञदत्तः विद्यालये पठति' इत्यत्र यज्ञदत्तस्य पठनस्वरूपः व्यापारः विद्यालय एव भवति। तादृशव्यापारस्य आश्रयत्वं विद्यालये सत्त्वात्तत्र भवत्यतिव्याप्तिरिति चेन्न। साक्षात्सम्बन्धेन क्रियाश्रयत्वं कर्तृत्वमिति। अत एव रामतर्कवागीशेनोक्तं साक्षात्क्रियाश्रयत्व[70] कर्तुः लक्षणमिति। क्रियाश्रयत्वं कर्तृत्वम् अस्य लक्षणस्य 'चैत्रः गच्छति' इत्यत्र चैत्रे समन्वयेऽपि 'चैत्रः ग्रामं त्यजति' इति प्रयोगकाले त्यागकर्तरि चैत्रे गमनकर्तृत्वापत्तिः तत्तु नेष्टमिति इति चेन्न। यद्धातूत्तराख्यातेन यगाद्यसमभिव्याहृतेन यद्धात्वर्थान्वितयादृशधर्मवत्त्वं बोध्यते, तादृशधर्मवत्त्वमेव, तत्क्रियाकर्त्तृत्वम्।[71] अर्थात् धातुतः यत्र यगादिप्रत्ययो न भवति शपादियुक्तः तिङ्प्रत्ययो जायते तत्र तिङा कर्तृत्वं बोध्यते। कर्तृत्वन्तु व्यापारे अनुकूलत्वसम्बन्धेन प्रथमान्तपदस्य प्रकृत्यर्थे च आश्रयत्वसम्बन्धेन चान्वयो भवति। पृथग्-पृथग् धातूनां पृथगर्थत्वात् तत्तद्धात्वर्थेषु अन्वितानि कर्तृत्वानि पृथग् पृथगेव भवन्ति। यथा 'रामः गच्छति' इत्यत्र गम्धात्वर्थः उत्तरदेशसंयोगजनकव्यापारे कर्तृत्वमन्वेति। रामः ग्रामं त्यजतीत्यत्र कर्तृत्वं विभागजनकव्यापारेऽन्वेति। वैयाकरणानां नये तु एकत्वाश्रयरामकर्तृकं वर्तमानकालिकं गमनमिति बोधः। एवञ्च एकत्वाश्रयरामकर्तृकग्रामकर्मक पूर्वदेशविभागजनकः व्यापार इति बोधो च जायते। तत्तत्क्रियाश्रयत्वं कर्तृत्वमिति लक्षणस्य घटं जानातीत्यादौ लक्षणसमन्वयेऽपि 'देवदत्तः तण्डुलं पचति', 'घटो नश्यति' इत्यादौ[73] कर्तरि देवदत्तघटादौ पाकनाशाश्रयत्वाभावादव्याप्तिरेव। एवं विक्लित्याश्रये तण्डुले नाशाश्रये कपाले चातिव्याप्तिरिति केचित् वदन्ति। तन्न, क्रियाभेदेन कर्तृस्वरूपस्य भिन्नतया पाकादिक्रियास्थले अनुकूलव्यापारवत्त्वसम्बन्धेन नाशादिस्थले च प्रतियोगित्वसम्बन्धेनाव्याप्तिरतिव्याप्तिश्च न सम्भवति।

कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोजकत्वं कर्तृत्वमित्यपि[74] केचिद् वदन्ति। अत्र सत्यन्तपदस्य प्रयोजनन्तु छेद्यसंयोगादिरूपव्यापारजनके कुठारादावति-व्याप्तिवारणाय। अप्रयोज्यत्वञ्च[75] फलानुकूलतज्जन्यव्यापारानाश्रयत्वमिति अस्यार्थः तत्क्रियानुकूलस्वभिन्नकारकजन्यव्यापारानाश्रितत्वम्। तथाच स्वभिन्नकारकजन्यतत्का-

र्योत्पत्त्यनुकूलव्यापारानाश्रितत्वे सति स्वभिन्नकारकजन्यतत्क्रियानुकूलव्यापारजनकत्वं कर्तृत्वमिति। यद्वा कर्मत्वाद्यन्यतमशून्यत्वे सति क्रियाकारकत्वं कर्तृत्वमिति यदि यत् तत् पदस्योपादानं क्रियते तदा तत्क्रियाकर्मत्वाद्यन्यतमशून्यत्वे सति तत्क्रियाकारकत्वं तत्कर्तृत्वमिति। यदि उच्यते यत्तत्पदयोरनुगतत्वादिदं लक्षणं न साधु तर्हि उच्यते भवानन्दतर्कवागीशेन–

'अनुकूलकृतिमत्त्वं कर्तृत्वमिति'[76] अथवा तत्क्रियानुकूलकृतिमत्त्वम् तत्क्रियाकर्तृत्वमिति। अर्थात् तत्तत्क्रियानिष्ठविषयतानिरूपितानुकूलत्वविषयतानिरूपित-विषयताविशिष्टकृतिमत्त्वमिति। प्रयोगशून्यतादशायां कर्त्तृत्वव्यवहारो ग्रन्थकृतामिष्टः, तदा समवायसम्बन्धेन[77] कृतिमत्त्वमेव कर्तृत्वं बोध्यम्। यदि च शरीरादावपि कर्त्तृत्वव्यवहारो मुख्यः, तदा समवायावच्छेदकताऽन्यतरसम्बन्धेन[78] तद्वत्त्वं ज्ञेयमिति। अचेतने कर्तृपदप्रयोगस्तु लाक्षणिक इति। न च नान्तरीयककलायपाकस्थले 'कलायं पचति' इति प्रयोगः स्यात् तदनुकूलकृतिमत्त्वादिति वाच्यम्। तत्तद्विषयकत्वेनापि कृतिर्विशेषणीया। तथा च स्वनिष्ठविषयतानिरूपकत्वस्वजनकत्वोभयसम्बन्धेन तत्तत्क्रिया-विशिष्टकृतिमत्त्वं कर्त्तृत्वमिति बोध्यम्।

न च अनुकूलकृतिमत्त्वमित्यत्र कृतिः यत्नः तर्हि काष्ठस्थाल्यादेः अपि कर्तृत्वविवक्षया 'काष्ठं पचति' 'स्थाली पचति' इति प्रयोगो न स्यात्। यतोहि अचेतनादौ यत्नाभावादिति वाच्यम्। "स्वतन्त्रः कर्ता" इत्यत्र स्वतन्त्रपदं पारिभाषिकमिति अत्र गदाधरभट्टाचार्येणोच्यते "स्वतन्त्रत्वञ्च कारकान्तरव्यापारानधीनत्वे सति कारकत्वम्। 'काष्ठं पचती'त्यादौ स्वातन्त्र्यविवक्षया काष्ठादेः कर्तृत्वमिति"[79]। न च कारकान्तरव्यापारानधीनकारकत्वरूपं यत् स्वतन्त्रत्वं तादृशस्वतन्त्रत्वरूप-कर्तृत्वबोधकविभक्तीनामचेतनकाष्ठादौ पुरुषाधीनत्वेनोक्तस्वतन्त्रत्वस्यापि असम्भवादिति वाच्यम् [80]समभिव्याहृतक्रियाकारकान्तरव्यापारानधीनतत्क्रियानुकूलस्य व्यापारस्यैव तत्क्रियावाचकपदसमभिव्याहृतविभक्त्यर्थत्वात्। 'चैत्रः पचति', 'काष्ठं पचति' इत्यादौ कारकान्तरबोधकपदाभावेन कारकान्तरोपस्थित्यभावात् तेन च कारकान्तरानधीनत्व-प्रतीत्यसम्भवात् तदभावरूपकारकान्तरानधीनत्वप्रतीतेरसम्भवादिति। अत एव तत्र कारकान्तरव्यापारानधीनत्वे सति कारकत्वं स्वतन्त्रत्वमिति बोध्यम्। भवानन्दः कर्तृत्वस्य यल्लक्षणं स्वीकरोति परन्तु मुख्यकर्तृत्वे भेदं दर्शयति। गदाधरेणोच्यते "मुख्यं[81] च क्रियाकर्तृत्वं न क्रियानुकूलकृतिमात्रम् एकक्रियाविषयककृतितो यत्र नान्तरीय-कक्रियान्तरनिर्वाहस्तत्र तत्कृतिमतः तत्क्रियाकर्तृत्वाभावात्, अत एव 'मत्तो भूतं न तु मया कृतम्' इति व्यपदेश इति, किन्तु "तत्क्रियाविषयकत्वे सति तदनुकूला या कृतिस्तदेव तत्कर्तृत्वम्"।[82] क्रियानुकूलकृतिमात्रस्य मुख्यकर्तृत्वस्यास्वीकारे कारणमुक्तं गदाधरेण– यत्र कृतिस्तु केवलं गमनक्रियानुकूलैवास्ति अथ च तत्सहावश्यंभाविनः

क्रियान्तरस्य परशरीरेऽभिघातस्यापि गमनानुकूलकृत्यैवाभिघातोऽपि परस्य जातः तत्र तत्कृतिमतोऽर्थात् गमनानुकूलकृतिमतोऽभिघातक्रियाकर्तृत्वम् इष्टं नास्तीति हेतोर्न क्रियानुकूलकृतिमात्रं मुख्यं क्रियाकर्तृत्वम्, उक्तस्थले अभिघातक्रियाकर्तृत्वाभावादेव तादृशस्थले 'मत्तो भूतम् न तु मया कृतम्' इति व्यपदिशन्ति, यदि च क्रियानुकूलकृतिमात्रं मुख्यं कर्तृत्वं स्यात्तदोक्तस्थले गमनानुकूलकृत्याप्यभिघाते जाते गमनानुकूलकृतिमतोऽभिघातक्रियाकर्तृत्वमपि स्यादेव कृतिं विनाभिघातस्याप्यसम्भवेनापि अभिघातक्रियोत्पादिकाया गमनानुकूलकृतेः सत्त्वादेव न चैतदिष्टम्। तत्क्रियाविषयकत्वे सति या तत्क्रियानुकूलकृतिः सैव मुख्यं तत्क्रियाकर्तृत्वमिति।[83] तथा च गमनानुकूलकृतेः उक्तस्थलेऽभिघातक्रियाविषयकत्वं नास्ति गमनकर्तुरभिघाते तात्पर्याभावात् इति नाभिघातक्रियाकर्तृत्वम्। मृगाद्युद्देशेन बाणप्रक्षेपाद् यत्र ब्राह्मणवधो जातः तत्र बाणप्रक्षेपव्यापारस्य मरणानुकूलत्वं कृतिविषयत्वञ्च यद्यप्यस्ति तथापि बाणप्रक्षेपस्य ब्राह्मणमरणानुकूलव्यापारत्वेनाभिप्रायविषयत्वाभावात् ब्राह्मणमरणानुकूलव्यापारत्वेन रूपेण अन्योद्देशेन बाणप्रक्षेपरूपव्यापारस्य कृतिविषयत्वम् नास्तीति तादृशव्यापारकर्तुः इति न तस्य सम्पूर्णप्रायश्चित्तं भवति। अत एव तत्क्रियाविषयकत्वे सति तत्क्रियानुकूला या कृतिस्तद्वत्त्वमेव मुख्यं कर्तृत्वं वक्तव्यमिति अनुकूलकृतिमत्त्वमित्यत्र अनुकूलपरिष्कारं कुर्वन्नाह भवानन्दः– "कार्यत्वानवच्छिन्नजन्यतानिरूपितमसाधारणमनुकूलत्वमेव वा लक्षणघटकमित्याहुः।"[84] तथा च कर्तृत्वस्य लक्षणं भवति कार्यत्वानवच्छिन्नजन्यतानिरूपितासाधारणानुकूलकृतिमत्त्वं कर्तृत्वम्।

अस्य कर्तृलक्षणस्य ईश्वरे नातिव्याप्तिस्सम्भवति। उक्तमते अस्वारस्यं द्योतयन्नेव आह भवानन्दसिद्धान्तवागीशः आहुरिति। तथा च प्रतीयते यत् भवानन्दसिद्धान्तवागीशनये "अनुकूलकृतिमत्त्वमेव कर्तृत्वमिति। अत एव 'स च विश्वस्य कर्ता भुवनस्य गोप्ता"[85] इत्यादिवेदवाक्येषु यत् कर्तृत्वं विद्यते तत्रापि लक्षणसमन्वयात् लक्षणस्य दोषरहितत्वं सम्भवतीति।

न्यायकोशकारदिशा कर्म त्रिविधं भवति। प्रथमं पदार्थान्यतमं[८५], द्वितीयं पुण्यपापजनकं, तृतीयम् पाणिनिस्वीकृतकर्म इति। आद्यस्तु एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति[८६] कर्मलक्षणम्। अस्यान्यानि लक्षणानीत्थं सन्ति।

1. मूर्तमात्रद्रव्यसमवेतत्वं कर्मत्वम्।[८७]
2. संयोगाविभागानुकूलत्वम्।[८८]
3. संयोगभिन्नत्वे सति संयोगासमवायिकारणत्वं कर्मत्वमिति।[८९]
4. विभागासमवायिकारणत्वे सति संयोगहेतुत्वम् कर्मत्वम्।[90]
5. नित्यावृत्तिसत्तासाक्षाद्व्याप्यजातिरूपं कर्मत्वम्।[91]

6. नित्यावृत्तिपदार्थविभाजकोपाधिमत्त्वम् कर्मत्वम्।[92]

7. अनेकाश्रितावृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं कर्मत्वम्।[93]

द्वितीयकर्म तु क्रियते फलार्थिभिः इति कर्म धर्माधर्मात्मकं बीजाङ्कुरवत्-प्रवाहरूपेणानादिः तन्त्रशास्त्रे कर्म षड्विधम्, शान्तिकरणम्, वशीकरणम्, स्तम्भनम्, विद्वेषः, उच्चाटनम्, मारणञ्चेति। केचित्तु कर्म त्रिविधम् नित्यं, काम्यं, नित्यकाम्यञ्चेति। तत्र नित्यं कर्म सन्ध्यावन्दनादिः। केवलं काम्यं यागादिः। नित्यकाम्यञ्च एकादशीव्रतादीनि इत्याहुः। गीतायां शुक्लकृष्णकृष्णशुक्लभेदेन कर्म त्रिविधं भवति। तत्तु पुण्यपापजनकमिति। तृतीयस्तु कर्त्ता स्वक्रियया यं कारकम् अभीष्टतमं मत्वा तं प्राप्तुमिच्छति तं कर्म संज्ञा भवति। अत एव भट्टोजिदीक्षितेनोच्यते–

कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्म संज्ञं स्यात्। यथा– भाषेषु चरन्तमश्वं स बध्नाति इत्यत्र अश्वपतिः अश्वं माषक्षेत्रात् अन्यत्र बध्नाति। यतोहि भाषभक्षणेन अश्वस्य हानिर्भविष्यति। "कर्मणि द्वितीया"[94] इति सूत्रेण तस्मात् कर्मणः द्वितीया भवति। कदाचिदनिप्सिततमस्यापि कर्म संज्ञा भवति। यथा विषं भुङ्क्ते इत्यत्र विषानिप्सितमं वर्तत इति। "तथा युक्ते चानीप्सिततमम्"[95] इति सूत्रेण कर्मसंज्ञा भवति। भवानन्दतर्कवागीशः कारकचक्रे कर्मणः पञ्चलक्षणानि प्रतिपादितवान्। एतानि सर्वाणि लक्षणानि पूर्वाचार्यैः प्रतिपादितानि सन्ति। तान्यधोलिखितानि सन्ति।

1. करणव्यापार्य्यत्वं कर्मत्वम्।[96]

2. परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वम्।[97]

3. तत्तद्धात्वर्थतावच्छेदकफलशालित्वं तत्तद्धा[98]त्वर्थकर्मत्वम्

4. तत्क्रियानधिकरणत्वे सति तत्क्रियावच्छेदकफलशालित्वं कर्मत्वम्[99]

5. परसमवेततत्तद्धात्वर्थान्वयिफलविशेषशालित्वं तत्तद्धात्वर्थकर्मत्वम्।

अत्र वागीशेन प्रथम[100] द्वितीयचतुर्थलक्षणेषु दोषं दर्शयित्वा तत्खण्डितमिति। पञ्चमलक्षणस्य निर्वचनं प्राचीनानां मते कृतवानिति। तृतीयलक्षणं स्वीकृतवानिति तद्ग्रन्थस्यालोडनेन प्रतीयत इति।

**करणव्यापार्य्यत्वं कर्मणः लक्षणम्–**

इदं कर्मणः लक्षणन्तु प्राचीननैयायिकाः स्वीकुर्वन्ति। न्यायभाष्यकारनये चत्वारि तत्त्वान्येव भवन्ति। प्रमाता, प्रमाणं, प्रमेयं, प्रमितिश्चेति। तत्त्वशब्दस्य निर्वचने वाचस्पतिमिश्रेणोच्यते–

**"तत्त्वं हि प्रमाणव्याप्यत्वं प्रमाणव्यापारविषयत्वम्"**[101]

उक्तकथनमाधारीकृत्योदयनाचार्येणोक्तम्– वाचस्पतिमिश्रनये करण-व्यापारविषयत्वं कर्मणः लक्षणम्। यद्यपि उद्योतकरस्य मते यत्कर्मलक्षणं विद्यते क्रियाविषयत्वमिति तत्रैव वाचस्पतिमिश्रः उक्तवान्[102]"अनात्मसमवेत-क्रियाफलशालित्वं क्रियाविषयत्वं कर्मत्वमिति इदमेव लक्षणं मिश्रः स्वीकरोति इति प्रतीयते। करणव्यापारविषयत्वं कर्मत्वमिति लक्षणन्तु उदयनाचार्येण स्वीक्रियते इति केचन वदन्ति। उदयनाचार्यस्य परवर्ती शशधरोऽपि तदेव[103] स्वीकरोति। पूर्वोक्तकर्मलक्षणमभिलक्ष्य व पूर्वपक्षरूपेण करणव्यापार्य्यत्वं कर्मत्वमिति लक्षणं भवानन्देन प्रतिपादितम् करणव्यापार्य्यत्वं नाम करण[104]जन्यक्रियाऽनुकूलव्यापाराश्रयत्वम्। अत्र जन्यान्तं लक्षणे न दीयते तर्हि क्रियानुकूलव्यापाराश्रयः कर्ता करणञ्चापि भविष्यति तत्रातिव्याप्तिवारणाय कर्मणः लक्षणे करणजन्यत्वं दीयते। करणजन्यत्वस्य कर्मणि एव सत्त्वात् भवति लक्षणसमन्वयः। तथापि उक्तलक्षणस्य दात्रेण[105] धान्यं लुनाति" इत्यत्र छिदानुकूलहस्तादिकरणजन्यहस्तसंयोगादिरूपव्यापाराश्रये दात्रे अतिव्याप्तिर्सम्भवति। तस्य वारणं तु न केनापि प्रकारेण कर्तुं शक्यते। अस्मिन् लक्षणे दोषमुद्भावयन् आह श्रीहर्षः – [106]करणव्यापारविषयः कर्म? इति चेन्न "हस्तेन रामेण बाणेन शरेण विद्धो रावणः "इत्यादावतिप्रसङ्गात्" अत्र हस्तः शरश्च करणकारकं विवक्षितमस्ति। तथापि तस्य कर्मत्वमुक्तलक्षणेन भविष्यति। तत्रातिव्याप्तिदोषस्य सत्त्वात् तल्लक्षणं न साधु इति भवानन्दतर्कवागीशस्याभिप्रायः। कारकचक्रस्य टीकाकारः जय[107]रामोऽपि तदेव वदति।

परसमवेतक्रियाजन्यफलशालित्वं कर्मणः लक्षणमिति तु वाचस्पतिमिश्रैः उच्यते। प्रकृतलक्षणस्योल्लेखं[108] गङ्गेशोपाध्यायोऽपि अनुव्यवसायवादप्रकरणे कृतवानिति। हरिदासभट्टाचार्यः जयकृष्णतर्कालङ्कारोऽपि चेदमेव लक्षणं स्वीकुरुतः। उक्तलक्षणस्य तात्पर्यमिदं विद्यते यत् अभीप्सितकर्मकारकाद् भिन्ने कारके समवायसम्बन्धेन विद्यमाना या क्रिया, तस्याः जायमानं यत्फलं तदाश्रयस्य कर्म संज्ञा भवतीति। यथा देवदत्तः विद्यालयं गच्छति इत्यत्र विद्यालयः कर्मकारकरूपेण अभीप्सितो वर्तते। तद्भिन्ने देवदत्तकारके गमनक्रिया समवायेन विद्यते। गमनक्रियायाः यत्संयोगरूपं फलमुत्पद्यते तस्याश्रयो विद्यालयो वर्तते। अतः तस्य कर्म संज्ञा भवतीति कर्मलक्षणस्य समन्वयो भवति। परसमवेतपदस्यानुपादाने चैत्रः नगरं गच्छति इत्यत्र चैत्रेऽतिव्याप्तिर्दुर्वारैवेति। तथाच परसमवेतक्रियाजन्यफलशालित्वं कर्मणः लक्षणमिति। अत्रापि अव्याप्तिदोषस्योद्भावनम् आचार्याः कुर्वन्ति। यथा शशधरोऽपि[109] कथयति यत् आत्मानमात्मना जानामि इत्यत्र आत्मा ज्ञानरूपस्य फलस्य आश्रयः, अथ च ज्ञानरूपायाः क्रियायाः आश्रयः तदेवात्मा, परसमेवक्रियायाः तत्राभावात् अव्याप्तिरिति।

श्रीहर्षस्य[110] मतमिदमस्ति यदुक्तकारकलक्षणस्य अपादानकारकेऽतिव्याप्तिर्दुवारैव। यतोहि वृक्षात् पर्णं पततीत्यत्र पतनक्रियाया: विभाग: फलमुत्पद्यते । विभागस्तु वृक्ष एव वर्तते विभागस्य जनिका क्रिया (पतनाख्या) वृक्षभिन्ने पर्णे विद्यते। पर्णनिष्ठाया: क्रियाया: उत्पद्यमानं विभागरूपं फलं, तस्याश्रय: वृक्ष:। अत: वृक्षस्यैव कर्मसंज्ञा भविष्यति तत्र कर्मलक्षणस्य सत्त्वादतिव्याप्ति: आपतति। अत एव अपादानेतरत्वे सति परसमवेतक्रियाजन्यफलशालित्वम् कर्मण: लक्षणमिति। चित्सुखाचार्योऽप्याह–

"अपादानव्यतिरिक्तत्वे सति परसमवेतक्रियाफलशालिकर्म"[111] इति नदीतीरे वर्द्धते[112] इत्यत्र तीरे अधिकरणे उक्तलक्षणस्य सङ्गतत्वादतिव्याप्ति: पुन: दुर्वारैवेति। एवं संयोगावच्छिन्नक्रियाया: गम्धात्वर्थतया तज्जन्यविभागरूपफलाश्रये पूर्वदेशेऽतिव्याप्तिश्चेत्यपि बोध्यमिति। वृक्षात् पर्णं पततीत्यत्र अध:संयोगजनिका पतनक्रिया तत: जायमानो विभागरूपफलाश्रयस्य वृक्षस्य कर्मत्वात् वृक्ष: पर्णं पतति इति प्रयोगापत्तेर्दुर्वारैव इति। अनया रीत्यैवात्र अव्याप्त्यतिव्याप्तिदोषमुद्भाव्य तन्निराकृतमिति। रघुनाथशिरोमणिस्तु प्रतिपादितवान्–धात्वर्थतावच्छेदकफलशालित्वं[113] कर्मत्वमिति। "देवदत्त: गोरक्षपुरात् काशीं गच्छति" इत्यत्र काशीपदस्यैव कर्मसंज्ञा भविष्यति। यतोहि गमनक्रियात: जायमान: उत्तरदेशसंयोगरूपस्य धात्वर्थतावच्छेदक-फलस्य आश्रया काशी एव विद्यते। वायस: वृक्षं त्यजति इत्यत्रापि त्यागक्रियात: जायमानस्य विभागरूपधात्वर्थतावच्छेदकफलस्य आश्रयत्वात् वृक्षस्यैव कर्मसंज्ञा भवति न तु वायसस्य। उक्तकर्मलक्षणस्यैव कञ्चिद् परिष्कारं कुर्वन्नाह भवानन्दत-र्कवागीश:–

"तत्तद्धात्वर्थतावच्छेदकफलशालित्वं [114]तत्तद्धात्वर्थकर्मत्वम्" "नदी तीरे वर्द्धते इत्यत्र वृद्धधातोरकर्मत्वात् तत्तद्धात्वर्थतावच्छेदकफलाश्रयत्वं तीरे नास्ति अत: तीरस्य कर्मत्वापत्ति: न सम्भवति।

यदि तत्तद्धात्वर्थतावच्छेदकफलाश्रयस्यैव कर्मत्वं स्वीक्रियते तदा "वृक्षात् पर्णं भूतले पतति" इत्यत्र पत्धात्वर्थ: अध:संयोगजनिका क्रिया एवञ्च धात्वर्थतावच्छेदकफलमध:संयोग: तस्याश्रयं भूतलं तत्र कर्मत्वापत्ति:। फलत: वृक्षात्[115] पर्णं भूतले पतति इत्यस्य स्थाने वृक्षात् पर्णं भूतलं पतति इति प्रयोगापत्ति:। अत्र भवानन्देन भणितम्– य: "वृक्षात् पर्णं भूतलं पतति" इति प्रयोगं करोति तदनुसारं पत् धातु: सकर्मको विद्यते। तत्र पत्धात्वर्थतावच्छेदकम् अध:संयोगस्याश्रयं भूतलमस्ति। तस्य कर्मत्वविवक्षायां न कोऽपि दोष इति। "द्वितीयाश्रितातीतपतितगतात्य-स्तप्राप्तापन्नै:[116]" इति सूत्रेण नरकं पतित: इति नरकपतित: इत्यत्र द्वितीयान्तनरकपदस्य पतितपदेन समासो भवति तेन प्रतीयते यत् पत्धातु: सकर्मक इति। नागेशभट्टोऽपि[117]

तदेव स्वीकरोति। यदा धात्वर्थपतनादौ भूतलस्य अन्वयः परम्परया सम्बन्धेन भवति तदा वृक्षात् पर्णं भूतले पतति इति प्रयोगोऽपि साधु विद्यते। अत्र नागेश आह–

वृक्षाद् भूमौ पतति इत्यत्र कर्तृकर्मद्वारा तद्विवक्षाया आधारत्वमिति[118] अत्र केचन अधःसंयोगफलस्य आश्रयत्वेऽपि भूतलादेर्न द्वितीया" इति वदन्ति, अस्मिन् मते द्वितीयाविभक्त्यर्थ एव फलम्। फलस्य वा अधःसंयोगस्य वाचकं न पत् धातुरिति। रामः ग्रामं गच्छति इत्यत्र संयोगजनकगमनम् इति गम् धात्वर्थः। तत्र श्रोतुः जिज्ञासा जायते। संयोगरूपफलस्याश्रयः कः? तत्रोच्यते। संयोगाश्रयः ग्रामः अतः ग्रामस्य कर्मसंज्ञा भवति। पतति इत्यत्र अधः संयोगजनिका क्रिया पत् धात्वर्थः। अत्र श्रोतुः इयं जिज्ञासा एव न जायते यत् अधःसंयोगस्य आश्रयं भूतलमिति। यतोहि अधःसंयोगः अधोदेशात् भिन्नं प्रति निराश्रयो भवति। अतः वृक्षात् पर्णं भूतले पतति इत्येवं साधुप्रयोगः इत्यपि अपरे वदन्ति। अत्र प्राचीनाः समाधत्ते पत्धातुः अकर्मक एव भवति। सकर्मकत्वं नाम कर्तृभिन्नान्वयि-फलावच्छिन्नव्यापारबोधकत्वमिति।[119] पर्णं पततीत्यत्र पत् धात्वर्थः व्यापारः तज्जन्यं यत् अधःसंयोगरूपं फलं तस्य पर्णे कर्तृकारकेऽन्वयो भवति। अतः पत्धातुः अकर्मक[120] इति। तत्तद्धात्वर्थतावच्छेदकफलशालित्वं तत्तद्धात्वर्थकर्मत्वमिति लक्षणस्य "भूमिं प्रयाति खगः" इत्यत्र खगेऽतिव्याप्तिः[121] आपतति। अत्र धात्वर्थतावच्छेदक-संयोगस्याश्रया यथाभूमि विद्यते तथैव खगोऽपि वर्तते। यतोहि संयोगो द्विष्ठो भवति तस्याश्रया यथाभूमिः तथैव खगोऽपि भवति। अतः खगः खगं प्रयाति यद्वा खगं त्यजति खगः इति प्रयोगापत्तिः दुर्वारैवेति।

अत्र रघुनाथशिरोमणिः समादधाति–क्रियान्वयिपरसमवेतत्वमेव कर्मप्रत्ययार्थः। परसमवेतधात्वर्थजन्यधात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति दीधितिः। उक्ताशयं निरूपयन्नाह–भवानन्दतर्कवागीशः।

"एवञ्च परसमवेततत्तद्धात्वर्थान्वयिफलविशेषशालित्वं तत्तद्धात्वर्थकर्मत्वम्, अत एव गमिधातोः पूर्वदेशे न कर्मत्वम् तस्य विभागरूपफलेनानन्यत्वात्, एवं पतेरपि गुरुत्वासमवायिकारणप्रयोज्यविजातीयक्रियैवार्थः तस्य चाधः संयोगरूपफलेन नैवान्वयः।"[122] तथाच परिष्कृतं कर्मणः लक्षणन्तु–

परसमवेता या तत्तद्धात्वर्था क्रिया तज्जन्यं यत् धात्वर्थतावच्छेदकं फलं तत्शालित्वम् तत्तद्धात्वर्थकर्मत्वमिति। यद्वा परसमवेतधात्वर्थजन्यधात्वर्थता-वच्छेदकफलशालित्वं कर्मणः लक्षणमिति इदं लक्षणं भवानन्दतर्कवागीशस्य सिद्धान्तलक्षणमिति। नैयायिकास्तु प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधं स्वीकुर्वन्ति। अतः चैत्रः तण्डुलं पचति इत्यत्र तण्डुलवृत्तिविक्लित्यवच्छिन्नव्यापारानुकूलकृत्याश्रयः

चैत्र इति शाब्दबोधो जायते। कौण्डभट्टानुसारमुक्तकर्मलक्षणं गौरवदोषग्रस्तमिति।[123] क्रियाजन्यफलाश्रयत्वं[124] कर्मणः लक्षणम्। वागीशस्य यत् कर्मणः सिद्धान्तलक्षणं विद्यते तत्र परवर्तिनः वैयाकरणाः विचिकित्सां प्रदर्शयन्ति। परसमवेतपदं परित्यज्य तत्र क्रियानधिकरणत्वं विशेषणं ददति वैयाकरणाः वा दार्शनिकाश्च।

तत्क्रियानधिकरणत्वे सति तत्क्रियावच्छेदकफलशालित्वम् कर्मत्वमिति।[125] अस्यार्थः यः क्रियायाः आश्रयो न भवति अथ च क्रियाजन्यस्य धात्वर्थता–वच्छेदकफलस्य आश्रयो भवति तस्यैव कर्म संज्ञा भवति। यथा "देवदत्तः नगरं गच्छति" इत्यत्र देवदत्तः गमनक्रियायाः आश्रयोऽस्ति। अतः धात्वर्थतावच्छेदकफलस्य संयोगस्य आश्रयत्वेऽपि तस्य कर्मसंज्ञा न भवति इति। इदं लक्षणं भवानन्दतर्कवागीशः न स्वीकरोति। भिन्नभिन्नवाक्येषु प्रयुक्तानि तिङन्तपदानि तत्र धातुतः उपस्थाप्याः याः याः क्रियाः तासां दृष्ट्या द्वितीयाविभक्तेः वा कर्मप्रत्ययानां पृथग् पृथग् अर्थस्य कल्पनया अनन्तशक्तिकल्पनापत्तेः। यथा विनयगोपालः ग्रामं गच्छत्यत्यत्र द्वितीयार्थः गमनक्रियाश्रयभिन्नः। खगः वृक्षं त्यजति इत्यादौ द्वितीयार्थः त्यागक्रियाश्रयभिन्नः। इत्थं क्रियाव्यक्तिभेदेन द्वितीयार्थस्यानेकत्वापत्तिः। मल्लो मल्लं गच्छति अत्र एकः मल्लः अपरमल्लं प्रतिगच्छति अत्र अपरमल्लस्य कर्मसंज्ञा न भवितुमर्हति। यतोहि मल्लयुद्धे कर्तृसंज्ञको मल्लः कर्मसंज्ञकश्च मल्लश्चापि गमनक्रियायाः आश्रयो भवति। अतः कर्मलक्षणे "तत्क्रियानधिकरणत्वे[126] सति" पदस्योपादाने अभीष्टकर्मसंज्ञके मल्ले उक्तलक्षणस्याव्याप्तिर्भविष्यति। नागेशभट्टोऽपि अत्राव्याप्तिदोषं स्वीकरोति। तैरुच्यते– "तन्न। 'काशीं गच्छन् पथि मृतः' इत्यादौ काश्याः, काशीं गच्छति न प्रयागम् इत्यादौ प्रयागस्य, ग्रामं न गच्छति इत्यादौ ग्रामस्य च तादृशफलशालित्वाभावाद् एतस्य लक्षणस्य अत्र सर्वत्र अव्याप्तेः।"[127] तथाचेदं वक्तुं शक्यते यत् प्रकृतलक्षणमव्याप्तिदोषग्रस्तमिति।

प्राचीननैयायिकानां नये धात्वर्थः केवलव्यापारः[128] द्वितीयाविभक्त्यर्थः फलं राजगोपालः विद्यालयं गच्छतीत्यत्र गम् धात्वर्थः पादप्रक्षेपादिव्यापारः द्वितीयान्तपदं विद्यालयमित्यनेन विद्यालयवृत्तिसंयोगः इत्यस्य बोधो भवति। खगः वृक्षं त्यजति इत्यत्र त्यज् धात्वर्थः स्पन्दनम् वृक्षपदोत्तर-अम्विभक्त्यर्थः विभागः, तथा च वृक्षवृत्तिविभागजनकस्पन्दनानुकूलकृतिमान् खगः इति शाब्दबोधः। ग्रामो गम्यते, ग्रामस्त्यज्यते इत्यत्र गमनम्, त्यागश्च व्यापारः स च गम्त्यजधात्वर्थौ संयोगरूपं फलं विभागरूपं फलञ्च यक्+त=प्रत्ययार्थः। प्राचीननैयायिकानां नये फलं न धात्वर्थतावच्छेदकमिति। कुत्रचित् द्वितीयान्तपदाभावे वा कर्मप्रत्ययाभावे अनादितात्पर्यवती लक्षणा स्वीक्रियते। तया लक्षणया संयोगावच्छिन्नगमनं गमधातोः अर्थः वा विभागावच्छिन्नव्यापारः त्यज्धात्वर्थ इति। प्राचीननैयायिकानां नये तु परसमवेततत्तद्

धात्वर्थान्वयिफलविशेषशालित्वं तत्तद्धात्वर्थकर्मत्वमिति।[129]

अभीष्टकर्मकारकात् भिन्नकर्तरि समवायसम्बन्धेन वृत्तिः या क्रिया तादृशक्रियान्वयिफलविशेषस्य यः आश्रयः तस्य कर्मसंज्ञा भवति। परसमवेतक्रिया–जन्यफलशालित्वम् कर्मत्वमिति लक्षणन्तु पूर्वमुक्तमिति तल्लक्षणन्तु भिन्नमिति।

परसमवेततत्तद्धात्वर्थान्वयिफलविशेषशालित्वं कर्मणः[130] लक्षणम् अस्मिन् लक्षणे फलस्य विशेषणं धात्वर्थान्वयि विद्यते।

प्रयागात् काशीं गच्छति विनोदः इत्यत्र उत्तरदेशकाश्यामेव प्रकृतकर्मलक्षणस्य समन्वयो भवति। यतोहि प्राचीननये गम्धात्वर्थः गमनव्यापारः तस्य द्वितीयार्थे संयोगेऽन्वयो भवति। विभागरूपफलविशेषस्य उक्तव्यापारेऽन्वयो न भवति। अतः संयोगस्य आश्रया काशी एव विद्यते। तत्रैव कर्मसंज्ञा अभिहिता इति। एवं सर्वत्रैव लक्षणसमन्वयात् न कुत्रापि दोषः इति। प्रकृतकर्मलक्षणन्तु प्राचीननैयायिकाः स्वीकुर्वन्ति। प्राञ्चस्तु इत्याहुः[131] इत्यनेन अस्मिन् लक्षणे अस्वारस्यं वागीशेन द्योतितमिति।

अत्र कारकचक्रस्य टीकाकारैः जयरामैरुक्तम्–

"तन्न विभागाद्यवच्छिन्नस्पन्दशाब्दत्वस्य जन्यतावच्छेदकत्वे तादृशस्पन्दे शक्तेर्दुर्वारत्वादिति।"[132]

भवानन्दमते कर्म त्रिविधम्[133] प्राप्यं, विकार्य्यं, निर्वत्यञ्चेति। भर्तृहरिरपि "कर्तुरीप्सिततमं कर्म"[134] इति सूत्रमाश्रित्य निर्वर्त्यं विकार्यं प्राप्यञ्चेति त्रिविधं कर्म मन्यते। "तथायुक्तं[135] चानीप्सिततम्" इति सूत्रमाधारीकृत्य कर्मणः चतुर्थं भेदं स्वीकृतवान्–

**निर्वर्त्यञ्च विकार्यञ्च प्राप्यञ्चेति त्रिधा मतम्।**
**तत्रेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम्।।**[136]

गमनादिक्रियाजन्यं यत् संयोगादिफलं तस्याश्रयं कर्म प्राप्यकर्म इति। यथा विनयगोपालः ग्रामं गच्छति इत्यत्र विनयगोपालस्य गमनक्रियया यत् संयोगरूपं धात्वर्थतावच्छेदकं फलमुत्पद्यते तस्याश्रयो ग्रामो विद्यते। अतः ग्रामप्राप्यकर्म इति। भर्तृहरिणा उक्तम्–

**क्रियागतविशेषाणां सिद्धिर्यत्र न गम्यते।**
**दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते।।**[137]

नगरमुपसर्पति इत्यत्र नगरस्य विस्तृतत्वात् अल्पपरिमाणवतः माधवगोपालः तं द्रष्टुं न शक्नोति। अतः नगरे उक्तविशेषस्य दर्शनाभावात् तत् निर्वर्त्यं वा विकार्यं

कर्म नापितु प्राप्यकर्म एव इति हेलाराजैरुक्तमिति। वागीशस्य प्राप्यकर्मणः स्वरूपं भर्तृहरिस्वीकृतप्राप्यकर्मवदेव विद्यते।

## विकार्यं कर्म–

यदा काचिद् क्रिया पदार्थवृत्तिधर्मविनाशकं फलमुत्पादयति। तदा स च पदार्थो विकार्यं कर्म[138] भवति। अत एव भवानन्दैः भणितम्– "क्रिया यद्धर्मनाशकं फलं जनयति तद्विकार्यम्"। यथा "काष्ठं लुनाति" इत्यत्र लूञ् धात्वर्थः छिन्नभिन्नकरणक्रिया काष्ठे विद्यमानानामवयवानां संयोगरूपधर्मं नाशयति एवञ्च विभागरूपं फलञ्च जनयति। अतः काष्ठं विकार्यं कर्म इति। अत्र केचन आशङ्कन्ते यत् छिन्नभिन्नकरणक्रियातः काष्ठस्यैव नाशो भवति न तु तन्निष्ठस्य संयोगरूपस्य धर्मस्य। तर्हि कथं काष्ठं विकार्यं कर्म इति चेन्न। काष्ठपदमुक्तवाक्ये काष्ठावयवयेषु लाक्षणिकं, लूञ् धात्वर्थः आरम्भकसंयोगनाशकविभागजनककुठारनिष्ठव्यापारः। तथाचात्र शाब्दबोधस्याकारः काष्ठावयववृत्तिः तद् आरम्भकसंयोगः तन्नाशकविभाग-जनककुठारनिष्ठव्यापारानुकूलकृतिमान् अयमिति। यथा भवानन्दः विकार्यकर्मणः लक्षणं करोति तथैव भर्तृहरिणा अप्युक्तम्–

**प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्।**[139]
**किञ्चित् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्।।**

अर्थात् कयाचित् क्रियया कस्यचिद् द्रव्यस्य स्वरूपं नष्टो भवति अथवा कस्यचिद् द्रव्यस्य, गुणस्य वा पूर्वरूपस्य परिवर्तनं भवति तदा तद्द्रव्यं वा स च गुणः विकार्यं कर्म इति। यथा "काष्ठानि भस्म करोति" "सुवर्णं कुण्डले भवतः" इत्यत्र काष्ठं, सुवर्णं वा विकार्यं कर्म इति। भवानन्दमते प्राप्यं कर्म, विकार्यञ्च[140] कर्म मुख्यकर्म इति कारकत्वात् क्रियानिष्पत्तौ कारणं भूत्वा क्रियया सह सम्बद्धत्वात् क्रियाजन्यफलाश्रयत्वाच्च। परन्तु भर्तृहरिमते प्राप्यं कर्म, विकार्यं कर्म, निर्वत्यञ्च कर्म त्रीण्यपि मुख्यानि कर्माणि सन्ति। एतेषां कर्मणामन्तर्भावः इष्टतमेषु कारकेषु भवति। तथा च इदं वक्तुं शक्यते यत् वैयाकरणानां नये त्रयाणां कर्मणां मुख्यत्वं[141] विद्यत इति।

## निर्वर्त्यं कर्म–

क्रियया यद् निष्पाद्यं[142] भवति तदेव कर्म निर्वर्त्यं कर्म इति। यथा "कटं करोति" इत्यत्र कटनिष्पाद्यं भवति अत एव तत् निर्वर्त्यं कर्म इति। भर्तृहरिणा उक्तं यत् अस्तित्ववत्यः प्रकृतेः उपादानरूपस्य विवक्षां विनैव निष्पाद्यमानस्य पदार्थस्य कथनं भवति तन्निष्पाद्यं[143] कर्म इति।

यथा कटं करोति इत्यादौ कटस्य प्रकृते: तृणविशेषस्य काशाख्य-स्योपादनस्यास्तित्वं भवति। अत्र तृणविशेषस्योपादनत्वेन विवक्षा नास्ति। अत: तृणविशेषात् यन्निष्पन्नं: कट: स च निर्वर्त्यं कर्म इति। यस्य निष्पाद्यपदार्थस्य प्रकृते: अस्तित्वं न भवति तमपि निर्वर्त्यं कर्म मन्यते।[144] यथा "संयोगं जनयति," "विभागं जनयति" इत्यादौ संयोगविभागौ निर्वर्त्ये कर्मणी स्त:। असत्कार्यवादिनां न्यायवैशेषिकानां सत्कार्यवादिनां सांख्यानाञ्च मतयो: निर्वर्त्यस्य कर्मण: उत्पत्ते: प्राक् स्थितौ मतभेदो वर्तते। तथापि क्रियाया: जायमानं पदार्थं निर्वर्त्यं कर्म मन्यते। भवानन्दस्तु महानैयायिक: अत: असत्कार्यवादमाश्रित्यैव निर्वर्त्यं कर्म स्वीकरोति। भवानन्दमते निर्वत्यं कर्म अप्रधानकर्म[145] वर्तते। भर्तृहरिमते तत्तु प्रधानमिति।[146] "कटं करोति" अत्र "करोति" इत्यनेन कृत्याश्रयस्यैव बोधो जायते। यतोहि नैयायिकानां नये कृधात्वर्थ: कृति:, कृधातुना फलावच्छिन्नव्यापारस्य बोधो न भवति। अत: धात्वर्थतावच्छेदकफलस्याश्रय: न कट इति। कट: साध्यरूपेण कृते: विषयो भवति अत: कटरूपं निर्वर्त्यं कर्म अप्रधानम् भवति। एवं घटं करोति इत्यत्र धात्वर्थतावच्छेदकफलाश्रयत्वाभावात् घटस्तु अप्रधानं कर्म निर्वर्त्यमिति। यदि निष्पाद्यत्वं निर्वर्त्यकर्मण: लक्षणमुच्यते तदा "घटं पश्यति" अत्र दर्शनक्रियात: घटस्य निष्पत्तिर्न भवति। अत: घटं निर्वर्त्यं कर्म इति न मन्यते। स च प्राप्यं वा विकार्यमपि कर्म न भवितुर्महति। अत्र दृश्धातु: सविषयकस्य पदार्थस्य वाचकत्वात् गौणं सकर्मकम् वर्तते। पश्यति क्रियापदस्य कर्म यत् घटो विद्यते। स च दर्शनक्रियाया: विषयत्वात् अप्रधानकर्म इति। अत्र भवानन्द: आह–

"धात्वर्थविधेयत्वे निर्वर्त्यत्वे घटं पश्यति इत्यत्रातिरिक्तकर्मत्वापत्ति:"[147] इति। यद्युच्यते धात्वर्थविषयत्वं निर्वर्त्यत्वमिति तदा कटं करोतीत्यत्र वीरणं करोतीति प्रयोगापत्तिर्सम्भवति इति चेन्न। निर्वर्त्यत्वन्तु धात्वर्थविषयत्वमेव।[148] धात्वर्थविषयत्वन्तु उद्देश्योपादानीयविषयतातिरिक्तविषयत्वावच्छिन्नत्वे सति धात्वर्थविषयत्वमिति।[149] निर्वर्त्यकर्मोत्तरद्वितीयार्थ: उत्पादकत्वम्। एवञ्च "तण्डुलान् ओदनं पचति" इत्यत्र ओदनोत्पादक: यस्तण्डुलनाशक: पाक: तदनुकूलकृतिमान्[150] इति शाब्दबोधोऽत्र भवति। "कुष्माण्डं शाकं करोति" "दुग्धं दधि करोति" चेत्यादौ विकार्यकर्मोत्तर-द्वितीयार्थ: नाशकत्वं निर्वर्त्यकर्मोत्तरद्वितीयार्थ: उत्पादकत्वमिति तथाच शाकोत्पादिका या तण्डुलनाशिका कृति: तदाश्रयोऽयमिति, दध्योत्पादिका दुग्धनाशिका या कृति: तदाश्रयोऽयमिति च बोधो जायत इति। भवानन्दतर्कवागीशस्य ग्रन्थाभिप्रायोऽयं यत्–

उद्देश्यताख्य[151]कृतिविषयताभिन्नत्वे सति उपादानत्वाख्यकृतिविषयताभिन्नत्वे सति धात्वर्थविषयत्वमेव निर्वत्यकर्मण: लक्षणम्। अर्थात् निर्वर्त्यं कर्म तदेव विद्यते यस्मिन् कृत्युद्देश्यताख्या वा कृत्युपादानताख्यविषयतातिरिक्ता विषयता विद्यते।

धात्वर्थविषयता इत्यत्र धातुपदेन तदेव धातुः विवक्षितो विद्यते। यः फलावच्छिन्नव्यापारस्य बोधको नास्ति। अपितु ज्ञानम्, इच्छा, कृतिः वा द्वेषश्चेत्यादीनां सविषयकपदार्थानां वाचकं स्यात् अत एव कारकचक्रे प्रतिपादितं विद्यते।

"सविषयकपदार्थाभिधायिजानात्यादीनान्तु[152] विषयित्वरूपविभक्त्यर्थद्वारा नामार्थान्वयित्वमेव गौणसकर्मकत्वमिति।" स्तोकं पचति इत्यत्र स्तोकं क्रियाविशेषणं विद्यते तथापि धात्वर्थतावच्छेदकफलस्य आश्रयत्वाभावात् तत्र द्वितीया असाधु इति चेन्न तत्र द्वितीयाविभक्तिस्तु साधुत्वार्थकमिति। इत्थं जयरामः जगदीशतर्कालङ्कारः, जयकृष्णतर्कालङ्कारश्च अपि स्वीकुर्वन्ति। स्तोकं पचति अत्र स्तोके न कारकत्वं विद्यते। यतोहि अभेदातिरिक्तविभक्त्यर्थद्वाराक्रियान्वयित्वं मुख्यभाक्तसाधारणं कारकत्वम्। अथवा कर्तृत्वकर्मत्वादिषट्कान्यतमद्वारा क्रियान्वयित्वं कारकस्य लक्षणम्।

जगदीशेन कर्मत्वस्य स्वरूपमधोलिखितरूपेण प्रतिपादितम्

**यङन्तधातोरर्थो यस्तिङा स्वार्थेऽनुभाव्यते।**
**यत्रासौ कर्मता नाम कारकं कर्तृतेतरः।।**[153]

अर्थात् यङन्तयद्धातूपस्थाप्ययादृशार्थप्रकारकान्वयबोधो जायते कर्तृता-भिन्नस्तादृशोऽर्थः तद्धातूपस्थाप्यतादृशक्रियाकर्मत्वम्। अथवा यद्धातूपस्थाप्य यद्धर्मावच्छिन्न विशेष्यकयादृशार्थप्रकारकशाब्दबोधजनिका द्वितीयाविभक्तिः, तद्धर्मवत्त्वं तादृशधात्वर्थनिरूपितकर्मत्वम्।[154] गदाधरेण स्वग्रन्थे कर्मत्वविषये यत् प्रतिपादितम्। तन्निरूप्यते– "कर्मणि द्वितीया"[155] इत्यत्र कर्मपदं धर्मपरं सप्तम्यर्थः वाचकत्वमिति।[156] एवञ्च कर्मत्ववाचिका द्वितीयाविभक्तिरिति शाब्दबोधः। कर्मत्वञ्च क्रियाजन्य-फलशालित्वम्। तत्र धात्वर्थः क्रियाजन्यत्वं संसर्गमर्यादया भासते फलमात्रं द्वितीयार्थः।[157] नव्यमते तु संयोगादिरूपफलविशेषावच्छिन्नस्पन्दः गम्याद्यर्थः, द्वितीयार्थः आधेयत्वमिति।[158] न च "कर्मणि द्वितीया" इति सूत्रविरोधो भविष्यति इति वाच्यम्। अस्मिन् मते कर्मणि इत्यस्य तात्पर्यन्तु फलनिष्ठाधेयत्वान्वयिनि इति। अत्रैव कर्मणः लक्षणन्तु तद्धात्वर्थतावच्छेदकफलशालित्वमेव तद्धातुकर्मत्वमिति। परे तु मते समवायसम्बन्धा-वच्छिन्नाधेयता एव द्वितीयार्थ इति वृत्त्यनियामक सम्बन्धस्य अभावप्रतियोगिता वच्छेदकत्वे[159] आधेयत्वं संसर्गो विभक्तेः संख्यामात्रमर्थः[160] फलावच्छिन्नो व्यापारः धात्वर्थः इत्यप्याहुः। फलव्यापारयोः पृथग् धात्वर्थतामते आश्रयत्वमेव आख्यातार्थः[161] इति। घटं जानाति इत्यत्र प्राचीनमते[162] द्वितीयार्थः विषयत्वमिति। "पर्वते वह्निमनुमिनोति चैत्रः" इत्यत्र विधेयत्वं विधेयित्वं वा द्वितीयार्थः।[163] गदाधरभट्टाचार्येणापि कर्मणः त्रिविधत्वं प्रतिपादितम् प्राप्यं, प्रकृतिः, विकृतिश्च। क्रियाजन्यफलशालिकर्म प्राप्यं कर्म यथोक्तम्–

**क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते।**
**दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते॥**[164]

क्रियानिष्पाद्यत्वं यत् तद् कर्म विकृतिरूपम्। यथा पाकादे: ओदनादि:। यस्य असत्त्वरूपविकारेण ओदनादिलक्षणविकारो जायते तत् प्रकृतिकर्म। यथा पाकादे: तण्डुलादि:। कुत्रचित् नाशकत्वमेव[165] द्वितीयार्थो भवति। नव्यास्तु फलमिव भेदोऽपि द्वितीयार्थ:।[166] द्वितीयार्थ: आश्रयत्वमिति[167] वैयाकरणा: वदन्ति। तन्न आश्रयतात्वविशिष्टस्याश्रयत्वस्य शक्यतावच्छेदकत्वे गौरवात् आश्रतात्वावच्छिन्ना-श्रयत्वस्य वाच्यत्वं न सम्भवति। केचन कर्मत्वस्याखण्डोपाधिरूपं स्वीकुर्वन्ति। तच्च परसमवेतक्रियाजन्यफलशालित्वसमनियतम्।[168] तन्न प्रकृतधात्वर्थक्रियाजन्यस्य प्रकृतधात्वर्थतावच्छेदकस्य वा फलस्याश्रयत्वेन क्लृप्तेनैव कर्मत्वव्यवहारोपपत्ते: अखण्डोपाधौ तत्र मानाभाव:। पदवाक्यरत्नाकरमते परसमवेतक्रियाविशेष-णीभूतधात्वर्थफलाश्रयत्वं कर्मत्वम् इति। धात्वर्थतावच्छेदकफलाश्रयतया इच्छाविषयत्वं कर्मत्वम्। इच्छार्थकधातुसमभिव्याहृतद्वितीयाया: मुख्यविशेष्यत्वरूपं कर्मत्वमर्थ:।[169] एवं रीत्या विविधमतमाश्रित्य कर्मत्वस्वरूपं मया प्रतिपादितम्।

करणकारकस्य त्रीणि लक्षणानि भवानन्देन निरूपितानि इति,

1. कारकान्तरेऽचरितार्थत्वे सति हेतुत्वं करणस्य लक्षणम्।

अथवा

फलायोगव्यवच्छिन्नकारणत्वं करणस्य लक्षणम्।

2. व्यापारवत्कारणं करणम्।

3. कारकत्वे सति कर्तृव्यापारविषयत्वं करणस्य लक्षणम्।

कर्तृकरणयोस्तृतीया इति पाणिनीयानुशासनात् क्रियान्वयिकर्तृत्वं करणत्वञ्च तृतीयार्थ:। कर्तृत्वं नाम कृति:, चैत्र: पचति इत्यत्र आख्यातार्थ: कृति: सा च क्रियाविशेष्यत्वं भवति। विक्लित्यनुकूलव्यापारानुकूलकृतिमान् एकत्ववाँश्च चैत्र इति बोधो भवति। चैत्रेण तण्डुल: पच्यते इत्यत्र कर्माख्यातस्थले चैत्रवृति-कृतिजन्यपाकजन्यविक्लित्याश्रय: तण्डुल: इति शाब्दबोधो जायते। चैत्रेण शय्यते इति भावाख्यातस्थले चैत्रवृत्तिकृत्तिजन्यशयनव्यापार: इति शाब्दबोध: अत्रापि कृते: क्रियाविशेषणत्वं प्राप्तम्। यत्तु मते कर्माख्यातस्थलेऽपि आख्यातार्थ: कृति: तृतीयार्थ: आधेयत्वं तृतीयार्थभूताधेयत्वस्य कृतिविशेषणतयान्वय: कृतेश्च धात्वर्थविशेषणतयान्वय: अत्रोच्यते एवं तृतीयाया: आधेयत्वार्थकत्वकल्पनमधिकं तेन गौरवं भविष्यति इति चेन्न चैत्रेण ज्ञायते इत्यत्र तृतीयार्थ: आधेयत्वं भवत्येव अत एव चैत्रवृत्तिज्ञानमिति

एवं चैत्रेण गम्यते इत्यत्रापि तृतीयार्थः आधेयत्वमत्रापि चैत्रवृत्तिसंयोगानुकूलव्यापारः इति शाब्दबोधो भवति।

चैत्रेण पच्यते इत्यत्र तृतीयार्थः एव कृतिः न तु आख्यातार्थः कृतौ चैत्रादेः सम्बन्ध एवाधेयत्वमिति स्वीकारे एव शाब्दबोधसम्भवे तृतीयायाः आधेयत्वे शक्तिस्वीकारे न किमपि मानम्। अत्रोच्यते तृतीयार्थः कृतिरिति स्वीकारे "चैत्रेण पच्यते न मैत्रेण" इत्यत्र मैत्रपदोत्तरतृतीयार्थः यदि मैत्रीयकृतिः तदभावस्य पाके एव अन्वयः स्यात्। कृतेश्च समवायेन अभावो मैत्रकर्तृकपाकेऽपि अस्त्येव यतोहि समवायेन कृतेः आत्ममात्रवृत्तित्वात्। अतः मैत्रकर्तृकपाकसत्त्वेऽपि "मैत्रेण न पच्यते" इति प्रयोगापत्तिः स्यात्। यदि चैत्रकर्तृकपाके मैत्रीयकृतेः जन्यतासम्बन्धेन अभावः उच्येत तदपि न सम्यक् जन्यतासम्बन्धस्य वृत्त्यनियामकत्वाद भावीयप्रतियोगिताच्छेदकत्वमेव न सम्भवति। तथा च न कृतिः तृतीयार्थः अपितु आधेयत्वमेव। तन्न "चैत्रेण पक्वम्" इत्यत्र आख्यातमेव नास्ति। अत्र कृत्प्रत्ययस्तु कर्मवाचकः न तु कृतिवाचकः। अतः अत्र तृतीयार्थः कृतिरिति अवश्यं स्वीकार्यं गत्यन्तराविरहात्। तथा च सर्वत्र कर्तृपदोत्तरतृतीयायाः कृतिस्वीकारे लाघवात् चैत्रेण पच्यते इत्यत्रापि तृतीयार्थः कृतिरिति। "काष्ठेन पच्यते" "स्थाल्या पच्यते" इत्यत्र अचेतनकाष्ठे अचेतनस्थाल्यां कृत्याश्रयत्वाभावात् व्यापारे एव प्राचीनमते आख्यातस्य लक्षणा स्वीक्रियते नवीनमते तु व्यापाराश्रये वा लक्षणा "चैत्रेण ज्ञायते" "चैत्रेण इष्यते" "चैत्रेण गम्यते" इत्यादौ आश्रयत्वरूपे कर्तृत्वे, आधेयत्वरूपे कर्तृमत्त्वे वा लक्षणा स्वीक्रियते, चैत्रकर्तृकज्ञानविषयताश्रयः वा चैत्रवृत्तिज्ञानविषयताश्रयः चैत्रकर्तृक इच्छाविषयताश्रयः, वा चैत्रवृत्तीच्छाविषयताश्रयः, चैत्रकर्तृकगमनव्यापारजन्यसंयोगाश्रयः, चैत्रवृत्तिगमनव्यापारजन्यसंयोगाश्रयो वेति शाब्दबोधो भवति। घटेन नश्यते इत्यत्र प्रतियोगित्वरूपे कर्तृत्वेऽनुयोगित्वरूपे कर्तृमत्त्वे वा लक्षणा। अत्र घटनिष्ठ-प्रतियोगितानिरूपको नाशः इति शाब्दबोधो भवति। केषाञ्चन मते कृतिजन्यत्वं, कृतिविषयत्वं वा तृतीयार्थः तथा च "चैत्रेण पच्यते" "चैत्रेण तण्डुलः पच्यते" इत्यत्र चैत्रवृत्तिकृतिजन्यत्वविशिष्टपाकजन्यविक्लित्याश्रयः तण्डुलः, चैत्रवृत्तिकृति-विषयताविशिष्टपाकजन्यविक्लित्याश्रयो तण्डुलो वा, चैत्रवृत्तिकृतिजन्यत्वविशिष्ट-पाकजन्यविक्लित्याश्रयः तण्डुलः यद्वा चैत्रवृत्तिकृतिजन्यत्वविशिष्टपाकजन्य-विक्लित्याश्रयः तण्डुलः इति शाब्दः। काष्ठेन पचति इत्यत्र करणत्वं तृतीयार्थः तच्च कर्तृव्यापाराधीनव्यापारवत्कारणत्वम्। एवञ्चात्र काष्ठकर्तृव्यापाराधीनव्या-पारवत्कारणकपाकानुकूलकृतिमानिति बोधः। "धनेन कुलम्" "विद्यया यशः" इत्यत्र हेतौ तृतीया भवति, अत्र धनहेतुकं कुलम्, विद्याहेतुकयशः इति बोधः इति। "पर्वतः धूमेन वह्निमान्" इत्यत्र क्रियायोगाभावात् हेतुतृतीयैव। अत्र ज्ञापकज्ञानविषयत्वरूपं हेतुत्वं, ज्ञानज्ञाप्यत्वरूपं वा हेतुमत्त्वं तृतीयार्थः।

धूमज्ञापकज्ञानविषयताक वह्निमदभिन्नः पर्वतः वा धूमज्ञानज्ञाप्यवह्निमदभिन्नः पर्वतः इति बोधः।

सहार्थयोगे साहित्यप्रतियोगिवाचकपदात् तृतीया भवति। "पुत्रेण सहागतः" अत्र पुत्रकर्तृकागमनसमानकालीनागमनकर्तृत्वं पुरुषे प्रतीयते। "दध्ना सह ओदनो भुज्यते" इत्यत्र दधिकर्मकभोजनसमानकालीनभोजनकर्मत्वमोदने प्रतीयते।

इत्थं भूतलक्षणे इत्यनेन लक्षणभूतजटादिवाचकपदात् तृतीया भवति। यथा "जटाभिस्तापसः" इत्यत्र जटोपलक्षितः तापसः इति बोधः। अत्र लक्षणत्वञ्च व्यावर्तकत्वम्, तच्च विशेष्यतावच्छेदकसमानाधिकरणाभावाऽप्रतियोगित्वम्, तदाश्रयश्च धर्मो द्विविधः विशेषणमुपलक्षणञ्च। विद्यमानं सद् व्यावर्तकं विशेषणम्। यथा गौरः चैत्रः इत्यत्र गौरवर्णः विद्यमानं सद् व्यावर्तकं भवति। अविद्यमानं सद् व्यावर्तकमुपलक्षणम् यथा तापसादेः कालान्तरीणजटादिकम्।

कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रस्य तात्पर्यमिदं वर्तते यत् कर्त्ता स्वक्रियायाः कारणभूतकर्मद्वारा यस्य कारकस्य सम्वद्धकर्तुमिच्छति तस्य सम्प्रदानसंज्ञा भवतीति भवानन्दवागीशो वदति। तदनुसारं सम्प्रदानस्येदं लक्षणं भवति।

तत्क्रियाकारणीभूतकर्मजन्यभागित्वेन उद्देश्यत्वं सम्प्रदानत्वम् यथा "विप्राय गां ददाति" इत्यत्र दातुः दानक्रियां प्रति गौः कारणमस्ति। यतोहि गोकारणेनैव दानक्रियायाः निष्पत्तिर्भवति। दानक्रियां प्रति स्वस्वत्वध्वंसपूर्वकपरस्वत्वरूपफलस्योत्पत्तिर्भवति। तत्र फलाश्रयरूपेण विप्रः दातुः उद्देश्यं भवति। अतः विप्रस्य सम्प्रदानसंज्ञा भवति।

अत्र विप्रविषयकगोजन्यफलप्रकारकेच्छापूर्वकगोवृत्तिस्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागानुकूलकृतिमान् इति शाब्दबोधः। कर्मजन्यपदे अदृष्टाद्वारकत्वविशेषणोपादाने अदृष्टाद्वारकतत्क्रियाकारणीभूतकर्मजन्यफलभागित्वेन उद्देश्यत्वं सम्प्रदानत्वम्। मतान्तरे सम्प्रदानस्य लक्षणं तत्क्रियाकारणीभूतकर्मजन्यधात्वर्थतावच्छेकफलभागित्वेन उद्देश्यत्वं सम्प्रदानत्वम्। त्यागजन्यस्वत्वजनकस्वीकाररवत्त्वं सम्प्रदानत्वम्। गदाधरभट्टाचार्यैरुच्यते 'सम्प्रदानत्वं च मुख्यभाक्तसाधारणं क्रियाकर्मसम्बन्धितया कर्त्रऽभिप्रेतत्वम्। क्रियाकर्मत्वम् क्रियाजन्यफलशालित्वम्। तद्वता सम्बन्धश्च तन्निष्ठफलभागित्वमेव, तथा च क्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वमिति।

पत्ये शेते इत्यत्र धात्वर्थः शयनं धात्वर्थतावच्छेदकशयनत्वस्य आश्रयत्वादभिन्नप्रीतिरूपफलस्याश्रयत्वं पतावेव विद्यते। अतः पतेः सम्प्रदानत्वं भवति अत्र पतेः गौणसम्प्रदानत्वं भवति। "वृक्षायोदकं सिञ्चति" इत्यत्र द्रवद्रव्यक्रियानुकूलव्यापार

एव धात्वर्थ इति वृक्षवृत्तिजलसंयोगो न धात्वर्थतावच्छेदक इति तादृशधात्वर्थतानवच्छेदकीभूतवृक्षवृत्तिजलसंयोगरूपफलभागितया सम्प्रदानत्वमिति। एवञ्च धात्वर्थतानवच्छेदकफलभागितयोद्देश्यत्वं सम्प्रदानत्वमिति।

"रूच्यर्थानां प्रीयमाण:" इत्यनुशासनेन प्रीतिजनकतारूपरुच्यर्थघटकप्रीतिभागिन: सम्प्रदानसंज्ञा भवति। "नारदाय कलह: रोचते" इत्यत्र प्रीतिजनकतारूपो यो रुच्यर्थ: तद् घटकप्रीते: भागिन: नारदस्य सम्प्रदानसंज्ञा भवति। तथा च नारदाश्रितप्रीतिजनकताश्रय: कलह: इति शाब्दबोध:। एवं कुध्रद्रुहादिषु स्पृहे, उत्तमर्णे चेत्यादिष्वर्थेषु नम: स्वस्तिस्वाहादियोगे च चतुर्थी भवति।

ध्रुवमपायेऽपादानमिति सूत्रानुशासनात् अपायो विश्लेष:, तस्मिन् साध्ये ध्रुवमवधिभूतं कारकमपादानं स्यात्। भवानन्दतर्कवागीशेनापादानकारकस्य लक्षणद्वयं निरूपितमिति।

1. परकीयक्रियाजन्यविभागाश्रयत्वम्।
2. विभागावधित्वमपादानत्वम्

तत्राद्यलक्षणे परिष्कारं कुर्वन्नाह भवानन्द: परकीयक्रियाजन्यधात्वर्थतावच्छेदकविभागाश्रयत्वम् अपादानत्वम्। गदाधरस्तु अपादानत्वञ्च स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतक्रियाजन्यविभागाश्रयत्वम्। भेदप्रतियोगितावच्छेदकत्वे विभागे च शक्तिद्वयम्। वृक्षात् पर्णं पततीत्यत्र वृक्षनिष्ठभेदप्रतियोगितावच्छेदकतन्निष्ठविभागजनकपतनाश्रय: पर्णमिति बोध:। वृक्षाद् विभजते इत्यत्र वृक्षावधिकत्वं विभागे प्रतीयते। अवधित्वादिकञ्च स्वरूपसम्बन्धविशेष:। यद्वा विभागोऽधिकरणता प्रयोजकत्वञ्च वृक्षात् पतति इत्यत्र पञ्चम्यर्थ:। "भीत्रार्थानां भयहेतु:" इत्यनेन व्याघ्राद् विभेति इत्यत्र आपादानसंज्ञा भवति। भयञ्च परतोऽनिष्टसंभावना, त्राणं चानिष्टनिवृत्त्यऽनुकूलो व्यापार:, व्याघ्रप्रयोज्यानिष्टसंभावनाश्रय: इति बोध:। "यवेभ्यो गां वारयति" "कूपादन्धं वारयति" इत्यत्र वारणार्थानामित्यनेन यवकूपादेरपादानत्वम्। गवीच्छाविषयो यो गलाधस्संयोग: गवादिनिष्ठतत्तत्फलकव्यापारविशेषकर्तृत्वाभावानुकूलकृतिमान्, अभिमुखदेशगमनत्वादिना कूपगमनादेरिच्छाविषयो य: उत्तरदेशसंयोग: अन्धनिष्ठ तत्तत्फलकव्यापारविशेषकर्तृत्वाभावानुकूलकृतिमान् इति च बोधो भवति। स्वसम्बन्धविवक्षायां चैत्रस्येदं पदबोध्ये चैत्रप्रतियोगिकस्वत्वबोधकत्वं कस्यापि कारकविभक्ते: नास्ति प्रसक्ति: अत: षष्ठी भवति। जात्यादिविशेषणविशिष्टयद्धर्मावच्छिन्नस्य जात्यादिविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्वविशिष्टविधेयवत्तया प्रतिपादनं क्रियते। तद्धर्मावच्छिन्नवाचकपदात् निर्धारणे षष्ठी विधीयते। तथाच "नराणां क्षत्रिय: शूर:" इत्यत्र क्षत्रियत्वविशेषणविशिष्टनरत्वावच्छिन्नस्य

क्षत्रियत्वविशेषणशून्यनरत्वावच्छिन्नव्यावृत्तशूरत्ववत्तया प्रतिपादनं क्रियते। अत एव नरादिपदात् षष्ठी वा सप्तमी भवति। नराभिन्नशूराभिन्नः क्षत्रियः इत्यपि शाब्दबोधं केचन वर्णयन्ति। "द्रव्याणां क्षितिपाथसी रसवती" इत्यत्र व्यावृतत्त्वं षष्ठ्यर्थः रसवदन्योन्याभावे द्रव्यस्य भेदद्वयविशिष्टद्रव्यत्वादिव्यापकतामात्रसम्बन्धेनान्वयः।

आधारस्यैवाधिकरणत्वादधिकरणे च सूत्रकृता सप्तम्या विहितत्वात् गदाधेरेणोच्यते आधारसप्तम्या आधेयत्वमर्थस्तस्य क्रियायामन्वयः, आधाराधेयभावश्च न संयोगादिरूपसम्बन्धात्मकः अपितु पदार्थान्तरमेव स च सम्बन्धविशेषावच्छिन्नः भवानन्दमते अधिकरणता, आधेयता च प्रतियोगितावत् अनुयोगितावत् स्वरूपसम्बन्धविशेषः। एकदेशीमते अधिकरणता सप्तपदार्थातिरिक्तः पदार्थः इति। भर्तृहरिमते कर्तृकर्मान्यतरद्वारा क्रियाश्रयत्वे सति तत्क्रियोपकारकत्वमधिकरणत्वम्। भवानन्ददिशा परम्परया क्रियाश्रयत्वम् अधिकरणस्य लक्षणम्। "चर्मणि द्वीपिनं हन्ति" इत्यत्र "निमित्तात्कर्मयोगे" इत्यनेन सप्तमीप्रकृत्यर्थचर्मादेर्हननादिक्रियानिमित्तत्वं बोधयति।

अभिमुखीकरणेच्छाविषयत्वं सम्बोधनप्रथमार्थः। चैत्र त्वया भुज्यताम् इत्यत्र वक्तुरव्यवहितशब्दजन्यबोधाश्रयत्वेनेच्छा प्रथमार्थः तस्याः इच्छायाः विषयतासम्बन्धेन प्रकृत्यर्थविशेषणतया भानम्।

स्त्रीप्रत्यया योनिमत्त्वरूपं स्त्रीत्वं बोधयन्ति। यथा अजा अश्वा, शूद्रा, श्यामा, चपला ब्राह्मणी गौरी, सुकेशी गर्भिणी चेति। क्वचित् स्त्रीप्रत्ययः स्त्रीत्वं भार्यात्वेन प्रकृत्यर्थविशेष्यतया बोधयति। यथा आचार्याणी, मनावी शूद्री इत्यादयः। भार्यात्वं सम्बन्धविशेषः। तद्धितप्रत्यया अपि नामप्रकृतिकाः क्वचित् प्रकृत्यर्थेन स्वार्थैकदेशस्य क्वचिच्च तेन स्वार्थस्यान्वयबोधं जनयन्ति इति गदाधरः। गार्गिः इत्यत्र तज्जन्यत्वमेव तदपत्यत्वमस्तीति जन्यत्वमपत्यैकदेश एव तच्च जन्यत्वमत्र गर्गनिरूपितमेव इति तत्र निरूपकत्वेन रूपेण गर्गस्यान्वयः, गर्गनिरूपितजन्यताश्रयो गार्गिः इति बोधः। तेन रक्तमित्यर्थे तद्धितप्रत्ययो भवति। तत्सम्बन्धाधीनतदीय-रूपारोपविषयत्वं तेन रक्तत्वमिति। पौषी रात्रिः इत्यत्र नक्षत्रयुक्तकालार्थे तद्धितः। पुष्ययुक्ता हि रात्रिः पौषी। पौषो मासः इत्यत्र पौर्णमासीघटितत्वावच्छिन्नः तद्धितार्थः। कापोतम् राजतम् जनता इत्यत्र समूहार्थविहितस्य तद्धितस्य पर्याप्तसमुदायत्वा-वच्छिन्नोऽर्थः, पर्याप्तौ प्रकृत्यर्थकपोतत्वाद्यवच्छिन्नस्यान्वयः।

धातुप्रकृतिकाश्च प्रत्ययाः लकारकृत्सन्यङ्णिच् प्रभृतयः भवन्ति। तत्र केचन सार्थकाः प्रत्ययाः केचन निरर्थकाश्च भवन्ति। "लः कर्मणि च भावे चाऽकर्मकेभ्यः" इति सूत्रेण लकाराणां शक्तिः कर्तृत्वे कर्मत्वे, भावत्वे च स्वीक्रियते। सन् प्रत्ययवाच्या इच्छा भवति। विशेष्यतासमानकर्तृकत्वोभयसम्बन्धेन धात्वर्थविशिष्टेच्छा

सन् प्रत्ययार्थः। चुरादौ णिच् स्वार्थे भवति। ण्यन्तप्रकरणे णिजर्थः हेतुकर्तृत्वं, तच्च स्वतन्त्रकर्तृप्रेरणा सा च अन्यनिष्ठकर्तृत्वस्य निर्वाहकव्यापार एव भवति।

लट्स्थानीयाख्यातेन वर्तमानकालः कृतिश्च लभ्यते। वर्तमानकालश्च शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मोपलक्षितकाल इति। तथाच लटः शक्तिस्तु शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षणेनानुगतीकृततत्तक्षणदिनमासवर्षत्वावच्छिन्ने काले एव। जगदीशभट्टाचार्यैः लट्निरूपणप्रसङ्गे उच्यते

**स्मयोगाभावतः स्वार्थातीतत्वानवबोधिका।**
**लडियं पदभेदेन द्विविधान्या अपीदृशः॥**

यादृशतिङः स्मशब्दोपसन्धानाभावप्रयुक्तः स्वार्थातीतत्वबोधकत्वाभावस्तादृशी तिङ् लडुच्यते। एवञ्च यादृशानुपूर्व्यवच्छिन्ननिष्ठस्वाश्रयार्थधर्मिकातीतत्वप्रकारकान्वयबोधजनकत्वानधिकरणं स्मशब्दसमभिव्याहाराभावप्रयोज्यं तादृशानुपूर्वीमत्तिङ्त्वम्। क्वचिद्वर्तमानसामीप्यमपि लटोऽर्थः, तच्च द्विविधं वर्तमानक्षणाव्यवहितोत्तरकालावच्छेद्यत्वं, तादृशक्षणाव्यवहितप्राक्कालावच्छेद्यत्वञ्च तथाच चैत्रः कदा गमिष्यति इति जिज्ञासायाम् एष गच्छति इति कथनानन्तरं वर्तमानक्षणोत्तरकालावच्छेद्यगतिमांश्चैत्रः। चैत्रः कदा समागत इति जिज्ञासायाम् एष आगच्छति इत्युत्तरस्य वर्तमानक्षणाव्यवहितप्राक्कालावच्छेद्यागमनवान् इति।

पक्ष्यति इत्यत्राख्यातार्थकृतौ लृङर्थभविष्यत्त्वस्य अन्वयो भवति। भुवः उत्पत्यर्थकतया अनागतकालोत्पत्तिकत्वं भविष्यच्छब्दार्थः। या तिङ् क्रियाया धात्वर्थस्यातिपाते विगमे भाविकालावच्छेद्यत्वस्य बोधिका तादृशी लृट्। यद्वा यादृशानुपूर्वीप्रकारकज्ञानत्वं धात्वर्थविगमधर्मिकभाविकालावच्छेद्यत्वप्रकारकबोधजनकतावच्छेदकं तादृशानुपूर्वीमत्तिङत्वं लृटत्वमिति जगदीशभट्टाचार्याः। पक्ता इत्यत्र लुटः अनद्यतन भविष्यत्त्वमर्थः। अनद्यतनभविष्यत्त्वञ्च शब्दप्रयोगाधिकरणदिवसाऽवृत्तित्वे सति शब्दप्रयोगकालीनप्रागभावप्रतियोगित्वम्, शब्दप्रयोगाधिकरणदिवसध्वंसोत्पत्तिकत्वं वा। अत्र जगदीशभट्टाचार्यस्तु "धात्वर्थे श्वस्तनत्वस्य बोधिका तिङ् लुडुच्यते" तथाच यादृशानुपूर्वीप्रकारकज्ञानत्वं धात्वर्थधर्मिकश्वस्तनत्वप्रकारकान्वयबोधजनकतावच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वं श्वस्तनत्वमिति। केचित्तु भविष्यत्त्वमेव लुडर्थः तन्न अनद्यतनत्वस्य लुडर्थत्वाभावे सति भविष्यत्त्वादिकमपि नाख्यातार्थः स्यात्, स्वरूपसद् भविष्यत्त्वादिकमेव लृडादिप्रत्ययस्य साधुतानियामकम्। अपाक्षीदित्यत्र लुङोऽतीतकालोऽर्थः, लुङर्थकालस्यापि आख्यातार्थकृतौ आधेयतासम्बन्धेनान्वयः। अथवा कालविशेषणतयैवातीतत्वमेव लुङर्थः। अतीतत्वस्य च आश्रयतासम्बन्धेन कृतावन्वयः। अतीतत्वञ्च वर्तमानध्वंसप्रतियोगित्वम्। गदाधरमते वर्तमानध्वंस एव लुङाद्यर्थस्तस्य प्रतियोगितासम्बन्धेन कृतावन्वयः। लङ्लकार-

स्यातीतत्ववदनद्यतनत्वमप्यर्थः। अनद्यतनत्वम् प्रकृतशब्दप्रयोगाधिकरणादिनाऽवृत्तित्वम्। यदा स्वातन्त्र्येण अनद्यतनत्वं न लङर्थः किन्तु शब्दप्रयोगाधिकरणदिनाद्यक्षण-वृत्तिध्वंसप्रतियोगित्वरूपमनद्यतनातीतत्वं विशिष्टमेव। लङः स्वरूपं निरूपयन्नाह–

**या स्मयोगे विना धातोः शबन्तस्यार्थधर्मिके।**
**अतीतत्वग्रहे हेतुस्तादृशी तिङ् लङुच्यते॥**

अर्थात् स्मशब्दस्य योगं विना शबन्तस्य धातोरर्थेऽतीतत्वस्यान्वयधीहेतुः यादृशी तिङ् लङ् उच्यते। स्मशब्दसमभिव्याहाराभावविशिष्टयादृशानुपूर्वीप्रकारकज्ञानत्वं शबन्तधात्वर्थधर्मिकातीतत्वप्रकारकशाब्दधीजनकतावच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वं लङ्त्वम्।

अतीतत्वमनद्यतनत्वं परोक्षत्वञ्च लिटोऽर्थः। परोक्षत्वञ्च वक्तुः साक्षात्काराविषयत्वम्। केचित्तु वक्तृभिन्नकर्तृकत्वमेव परोक्षत्वम् इत्याहुः। अत्र जगदीशैरुक्तम्–

**द्विरुक्तभिन्नधात्वर्थे स्वार्थस्यान्वयबोधने।**
**या न योग्या तादृशी तिङ् लिट्पदेनाभिधीयते॥**

अर्थात् यादृशानुपूर्वीप्रकारकज्ञानत्वं द्विरुक्तान्यधर्मिकस्वार्थप्रकारकान्वयबोध-जनकतावच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वं लिटत्वम्। अतीतकालः लिङर्थः "मनश्चचाल" इत्यत्र अतीतकाल इव धात्वर्थनिष्ठं परोक्षत्वमपि लिटोऽर्थः। तच्चातीन्द्रियत्वम्। तथा च "अतीतकालवृत्त्यतीन्द्रियचलवन्मन" इति शाब्दबोधो भवतीति।

यादृशानुपूर्वीप्रकारकज्ञानं स्वाश्रयवक्त्रनुमतत्वप्रकारकधात्वर्थविशेष्यकान्वयबोध-जनकं तादृशानुपूर्वीमदाख्यातत्वम् लोट् इति। "करोतु" "कुरुताम्" "कुर्वन्तु" इत्यत्र चैत्राद्युक्तत्वधीसहकृताः कृत्यादौ प्रकृत्यर्थे चैत्राद्यनुमतत्वं बोधयन्ति। 'पत्नी पचतु' इत्यत्र अनुज्ञैव लोडर्थः सा च कर्त्तुरिष्टत्वे सति वक्त्रनुमतत्वम्। "शूलं विश" इत्यत्र आज्ञा एव लोडर्थः। सा च वक्त्रनुमतत्वे सति कर्त्तुरनिष्टहेतुत्वम्। "पर्वतमप्युत्पाटयानि" "समुद्रमपि शोषयाणि" इत्यत्र लोडर्थः समर्थना, सा च पराशक्यधर्मिकस्वशक्यत्वाध्यवसायः इति। क्वचिद्वक्त्राशंसनमपि लोडर्थः।

विध्यन्वयबोधं प्रति समर्था लटो लोटश्च भिन्ना तिङ् लिङुच्यते। विधिस्तु प्रवर्तकचिकीर्षायां यत्प्रकारकज्ञानस्य हेतुत्वं स तथा, तादृशञ्च कृतिसाध्यत्वमिष्टसाधनत्वं बलवदनिष्टाननुबन्धित्वञ्च प्रत्येकमेव। "पङ्गुः समुद्रं न तरेत्" इत्यत्र कृतिसाध्यत्वं लिङर्थः। यत्तु कृतिसाध्यत्वबलवदनिष्टाजनकत्वाभ्यां विशिष्टमेवेष्टसाधनत्वं लिङर्थः।

इष्टसाधनत्वं बलवदनिष्टाननुबन्धित्वं कृतिसाध्यत्वञ्चेति विध्यर्थः। अस्मद्गुरुचरणास्तु बलवदनिष्टाननुबन्धित्वविशिष्टे साधनत्वविशिष्टकृतिसाध्यत्वं विध्यर्थः इति वदन्ति। लृङश्च भूतभविष्यत्कालयोः शक्तिर्बोध्या। यथा "सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमभविष्यत्" इति व्युत्पत्तिवादस्यात्यल्पाशयः।

ग्रन्थोऽयं न केवलं न्यायशास्त्रविदामेवोपकारक अपितु समस्तदार्शनिकानां व्याकरणादिशास्त्रविदामपि महदुपकारकः। यद्यपि एतस्य ग्रन्थस्य विविधाः टीकाः सन्ति। तेषु मुख्याः टीकाः अधोलिखिताः सन्ति।

1. जयानामिका महामहोपाध्यायजयदेवमिश्रविरचिता।
2. गूढ़ार्थतत्त्वालोकनामिका श्रीमहामहोपाध्यायधर्मदत्तझाविरचिता।
3. प्रकाशनामिका श्रीलक्ष्मीनाथझाविरचिता।
4. नौकानामिका श्रीखुद्दीझाविरचिता।
5. शास्त्रार्थकलानामिका श्रीवेणीमाधवशुक्लविरचिता।
6. दीपिकानामिका श्रीशिवदत्तमिश्रविरचिता।

एतदेपक्षया अतिसरला सुबोधगम्या प्रकृतग्रन्थस्य तात्पर्यप्रकाशिकेयमादर्शटीका विद्यते। यद्यपि द्वितीयाकारकपर्यन्तमुपलभ्यते तथापि सम्पूणेयं टीका सुदुर्लभेति ज्ञात्वा प्रकाशनस्योपक्रमः समादृत इति। टीकेयं संस्कृतजनानां व्युत्पत्तये महदुपकारिका भविष्यतीति मे मतिः।

अस्य ग्रन्थस्य प्रकाशने साहाय्यं विदधतां राष्ट्रिय-संस्कृत-संस्थानस्य विद्वद्वरेण्यानां प्राच्यप्रतीच्यविद्यानिष्णातानां कुलपतिवर्याणां श्रद्धेयानां प्रो॰ राधावल्लभत्रिपाठिमहोदयानां कृते हृदयेन कृतज्ञतां विनिवेदयामि येषां शास्त्रप्रेम्णाऽनुग्रहेण चैष ग्रन्थः सम्प्रति प्रकाश्यते। सर्वथा नैराश्यमनुभवन्नहं कुलपतिवर्याणां त्रिपाठिमहोदयनां समुत्साहवर्धनेन प्रकाशनार्थं संलग्नोऽभवम् अस्य ग्रन्थस्य प्रकाशने सर्वथा समुत्साहं कुर्वद्भ्यः श्रद्धेयगुरुवर्येभ्यः प्रो. वशिष्ठत्रिपाठिमहोदयेभ्यः कार्तज्ञ्यं विभर्मि। मां प्रति स्नेहं कुर्वद्भ्यः राष्ट्रियसंस्कृतसंस्थानस्य कुलसचिवमहोदयेभ्यः व्याकरणादिशास्त्रनिष्णातेभ्यः आचार्यरामानुजदेवनाथमहोदयेभ्यः धन्यवादं वितीर्य विरमामि।

गुरुपूर्णिमा सं॰ 2067

**–हरेरामत्रिपाठी**
आचार्योऽध्यक्षश्च
सर्वदर्शनविभागस्य
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्,
नवदेहली

**संदर्भः**


१. शब्दशक्तिप्रकाशिका ।।६०।। पृ.सं. २८३

२. तदेव ।।६२।। पृ.सं. २८४, २८५

३. तदेव ।।६३।। पृ.सं. २८६

४. शब्दशक्तिप्रकाशिका पृ.सं. २८८

५. कृष्णकान्तीटीका पृ.सं. २८८

६. शब्दशक्तिप्रकाशिका कारिका ।।६६।।

७. कृष्णकान्तीटीका पृ.सं. २८९

८. शब्दशक्तिप्रकाशिका पृ.सं. २८९

९. शब्दशक्तिप्रकाशिका पृ.सं. २९०

१०. पदवाक्यरत्नाकरः गूढार्थदीपिकासहितः पृ. सं. ५८०

११. शब्दशक्तिप्रकाशिका पृ.सं. २९१

१२. शब्दशक्तिप्रकाशिका पृ.सं. २९२

१३. शब्दशक्तिप्रकाशिका पृ.सं. २९२

१४. कृष्णकान्तीटीका पृ.सं. २९२

१५. शब्दशक्तिप्रकाशिका ।।कारिका।।६७।। पृ. २९४

१६. न्यायवार्तिक - अध्याय २ आह्निक १ सूत्र १६ पृ. १९६

१७. कलापव्याकरणस्य वृत्तिटीकायां २-४-१५ पृ. १६

१९. न्यायवार्तिकतात्पर्यटीका २-२-६२ पृ.सं. ६६४ (कलकत्ता प्र.)

२०. शृङ्गारप्रकाश द्वितीयप्रकाश पृ. ४२

२१. वैयाकरणसिद्धान्त लघुमञ्जूषा पृ. ५४०

२२. वैयाकरणसिद्धान्त कुञ्जिकाटीका पृ. ५४१

२३. कारकचक्रम् माधवटीका पृ.सं. २

२४. तुभ्यं ददानीत्युक्ते ब्राह्मणो यदि ददस्वेति ब्रूयात् तेन ब्राह्मणस्यइच्छामन माय दाने निष्टसाधनताज्ञाननिवृत्त्या इष्टसाधनताज्ञानाद् दोननिष्पत्तिरिति अनुमतिप्रकाशनद्वारा ब्राह्मणस्य दानप्रयोजकत्वमिति माधवीटीका कारकचक्रम् पृ. २

२५. कियानिमित्तत्वं कारकत्वमिति न सामान्यलक्षणम् का.च. पृ. १

२६. सम्प्रदानादेरनुमतिप्रकाशनद्वारेव तण्डुलादिसम्पादनद्वारा सम्बन्धिनोऽपि पाकादिक्रियानिमित्तत्वेन सम्बन्धिनि चैत्रस्य तण्डुलं पचतीत्यादौ चैत्रादावतिव्याप्तेः। कारकचक्रम् पृ. २

२७. कारकवादार्थः पृ.सं. ३

२८. सा. म.पृ. ३२-३३

२९. ननु किमिदं कारकत्वम्। न तावत् क्रियाप्रयोजकत्वम्। देवदत्तस्य तण्डुलं पचतीत्यत्रानुमतिद्वारा क्रियाप्रयोजके देवदत्तेऽतिप्रसङ्गात्।

३०. कारकचक्रम् पृ. सं. ३

३१. कर्मवाच्यस्थले व्यापारजन्यफलं धात्वर्थः।

३२. कर्तृवाच्यस्थले फलावच्छिन्नव्यापारः धात्वर्थ इति।

३३. सविषयकपदार्थाभिधायिजानात्यादीनान्तु विषयित्वरूपविभक्त्यर्थद्वारा नामार्थान्वयित्वमेव गौणं सकर्मकत्वम्। कारकचक्रम् पृ.सं. २१-२२

३४. कारकचक्रम् माधवीटीका पृ. सं. ३

३५. तदेव माधवीटीका पृ.सं. ३

३६. कारकचक्रम् पृ.सं. ६

३७. कारकचक्रम् पृ.सं. १५ अत्राहु: "अनुकूलकृतिमत्त्वं कर्तृत्वम्

३८. कारकचक्रम् पृ.सं. २०

३९. कारकचक्रम् पृ.सं. १९

४०. कारकचक्रम् पृ.सं. २२

४१. व्यापारत्वकारणं करणमिति, तेन हस्तादौ कुठारादौ च नाव्याप्ति: कारकचक्रम् पृ. ५७

४२. कारकचक्रम् पृ.सं. ८२

४३. कारकचक्रम् पृ.सं. ९३

४४. कारकचक्रम् पृ.सं. ९९

45. पदवाक्यरत्नाकर:- पृ. सं. 371

46. कारकप्रकरणम् 2[3[46 पृ. सं. 765

47. अष्टाध्यायी 1[4[54 वैयाकरणसिद्धान्तकौमुदी पृ. 803

48. वैयाकरणसिद्धान्तकौमुदी, कारकप्रकरणम्, लक्ष्मीटीका पृ. सं.-803

49. तदेव पृ. सं. 803

50. तदेव पृ. सं. 804

51. तदेव पृ. सं. 804

52. तदेव पृ. सं. 804

53. वैयाकरणसिद्धान्तकौमुदी, कारकप्रकारणम्, लक्ष्मीटीका पृ. सं. 804

54. शब्दशक्तिप्रकाशिका, कारिका-75 पृ. सं. 337

55. शब्दशक्तिप्रकाशिका, टिप्पणी पृ. सं. 337

56. काशिकावृत्ति:, भाग:- 1, 1[4[54 पृ. 583-84

57. प्रौढमनोरमा, तृतीयभाग:- पृ. 879

58. लघुशब्देन्दुशेखर:, कारकप्रकरणम्, पृ. 476

59. वैयाकरणसिद्धान्तकौमुदी, भाग:-2, कारकप्रकरणम्, पृ. 804 (लक्ष्मीटीकासहिता)

60. तदेव पृ. सं. 804

61. कारकचक्रम् पृ. सं. 7

62. कारकचक्रम् पृ. सं. 13

63. तदेव पृ. सं. 15

64. भवानन्दकृतकारकप्रयोग:, कुरुक्षेत्रविश्वविद्यालय:, पुस्तकालयप्राप्ति सं. 19879 पत्र सं. 2 इत्यत्र टिप्पणी विद्यते।

65. कृञ्-उत्पत्तिव्यधिकरणस्तदनुकूलो व्यापारोऽर्थ:, परमलघुमञ्जूषा, धात्वर्थनिर्णय: पृ. 158

66. कारकचक्रम्, वा. पृ. 9

67. श. कौ. (भाग-2) 1,3,67 पृ. 81

68. वैयाकरण भूषणसार (धा. नि.) का. 2 पृ. 22

69. प. ल. म. (का. नि.) का. 2, पृ. 22

70. मुक्तबोधव्याकरणम्, भाग:-1, पुस्तिका 4, सू. सं. 289, पृ. 297

71. कारकचक्रम्, पृ. सं. 9
72. कारकचक्रम्, माधवीटीका पृ. सं. 10
73. कारकचक्रम्, पृ. सृ. 13
74. कारकचक्रम्, पृ. सृ. 13
75. कारकचक्रम्, पृ. सृ. 15
76. कारकचक्रम्, माधवीटीका 15
77. कारकचक्रम्, माधवीटीका 15
78. व्युत्पत्तिवादः, तृतीयाकारकम् पृ. सं. 400,
79. तदेव, पृ. सं. 400
80. व्युत्पत्तिवादः, पृ. सं. 406
81. व्युत्पत्तिवादः, पृ. सं. 406
82. व्युत्पत्तिवादः
83. कारकचक्रम्, पृ. सं. 17
84. मुण्डकोपनिषत्, 1.1.1, पृ. 15
85. न्यायकोशः पृ. सू. 205, 206, 207
86. वैशेषिकसूत्रम् 1/1/17
87. तर्क कौ. पृ. 20
88. वाक्य. पृ. 22
89. त.दी. 1 पृ. 6
90. दि.गु.पृ. 198
91. वै. उप. 1/1/17
92. ल.व.
93. त.व. परि. 16 पृ. 240
94. अष्टाध्यायी 2/3/2 वै.सि.कौ.सू.सं. 537 मूल पृ. 59
95. अष्टाध्यायी 1/4/50 वै.सि.कौ.सू.सं. 538 मूल पृ. 60
96. कारकचक्रम् पृ. 18
97. तदेव पृ. 19
98. तदेव पृ. 20
99. तदेव पृ. 25
100. कर्मत्वन्तु न करणव्यापार्य्यत्वं, नापि परसमवेतक्रियाजन्यफलशालित्वम्, यत्तुतत्क्रियाऽनधि- करणत्वे सति तत्क्रियावच्छेदकफलशालित्वं कर्मत्वम्, का. च. पृ. 18, 19, 25
101. न्या. वा. ता. टी. 1, 1, 1 पृ. 42
102. न्या. वा. ता. टी. (कलकत्ताद) 2.1.16 पृ. 437
103. न्यायसिद्धान्तदीय पृ. 25
104. कारकचक्रम् पृ. 18
105. कारकचक्रम् पृ. 19
106. खण्डनखण्डखाद्य (वनारस 1948) प्र.परि.पृ.166
107. का.च.वा. पृ. 10-11

108. परसमवेतक्रियाफलशालित्वं करणव्यापारविषयत्वं वा कर्मत्वम् त.चि. प्रत्यक्षखण्ड पृ. 795
109. न्यायसिद्धान्तदीप: (आधेयशक्तिवाद:) पृ. 25
110. खण्डनखण्डखाद्यम् (बनारससं. 1948) प्र.परि. पृ. 157
111. चित्सुखाचार्य खण्डनभावदीपिका पृ. 159
112. ख.खण्ड, खा. प्र. परि. पृ. 159-160
113. कारकचक्रम् पृ.सं. 19
114. कारकचक्रम् पृ.सं. 20
115. कारकचक्रम् पृ.सं. 37
116. अष्टाध्यायी 2, 1, 24
117. वैयाकरणभूषणसार: (सुबर्थ निरूपणम् पृ. 120
118. वै.भू. सा. पृ. 120
119. कारकचक्रम् पृ. 38
120. तदेव पृ. 38
121. तदेव पृ. 67
122. कारकचक्रम् पृ.सं. 34
123. तन्न रोचयामहे, परसमवेतत्वादेर्गौरवेणावाच्यत्वात्। वै.भू.सार पृ. 181
124. वैयाकरणभूषणसार पृ. 169
125. कारकचक्रम् पृ. सं. 25
126. कारकचक्रम् पृ. सं. 27, 28
127. परमलघु मञ्जूषा (कारकनिरूपणम्) पृ. 341
128. वैयाकरणसिद्धान्तमञ्जूषा पृ. 35
129. कारकचक्रम् पृ. 43
130. कारकचक्रम् पृ. 34
131. कारकचक्रम् पृ. 34
132. कारकचक्रम् वा. पृ. 19-20
133. कारकचक्रम् पृ. 35
134. पाणिनीय अष्टाध्यायी-1/4/49 सिद्धान्त कौमुदी मू.पृ. 59 सि.कौ.सू. 535
135. पाणिनी अष्टाध्यायी-1/4/50 सिद्धान्तकौमुदी मू.पृ. 60 सि.कौ.सू. 538
136. वाक्यपदीयम् साधनसमुद्देश: 3, 7, 45 पृ. 266
137. वाक्यपदीयम् साधनसमुद्देश: 3, 3, 51 पृ. 269
138. कारकचक्रम् पृ. 36
139. वाक्यपदीयम् पृ. 3, 7, 50 पृ. 269
140. प्राप्यविकार्ययो: कारकत्वात् तादृशफलाश्रयत्वाच्च मुख्यं कर्मत्वम् कारकचक्रम् पृ. 36
141. वाक्यपदीयम् पृ. 266
142. कारकचक्रम् पृ. 36
143. वाक्यपदीयम् पृ. 267
144. सती वा विद्यमाना वा प्रकृति: परिणामिनी।
145. यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते।। वाक्यपदीय, 3-7-47

146. कारकचक्रम् पृ37 निर्वत्यञ्च निष्पाद्यं– गौणं कर्मत्वम् (सा. समु.) पृ. 267
147. कारकचक्रम् पृ. 37
148. तदेव पृ. 37
149. कारकचक्रम् पृ. 37
150. प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधं नैयायिकाः स्वीकुर्वन्ति।
151. कारकचक्रम् पृ. 37 प. सुधांशुशेखरकृत टिप्पणी पृ. 48
152. तदेव पृ. 20
153. शब्दशक्ति प्रकाशिका का. 73 पृ. सं. 316
154. शब्दशक्ति प्रकाशिका का. 74 पृ. सं. 329
155. वैयाकरणसिद्धान्तकौमुदी कारकप्रकरणम् सू.सं. 537 अष्टाध्यायी 2/3/2 पृ. 59 मू.
156. व्युत्पत्तिवादः पृ. सं. 207
157. व्युत्पत्तिवादः द्वितीयाकारकः (सादर्श व्याख्यासहितः) पृ. सं. 207
158. फलान्वयिनी वृत्तिरेव द्वितीयार्थः। व्युत्पत्तिवादद्वितीयाकारक पृ. 216
159. व्युत्पत्तिवादः पृ. सं. 227
160. तदेव पृ.सं. 229
161. तदेव पृ. 264
162. तदेव पृ. 272
163. तदेव पृ. सं. 295
164. व्युत्पत्तिवादस्य आदर्शटीका 336
165. व्युत्पत्तिवादः पृ. 340
166. शाब्दबोधमीमांसा द्वितीयार्थ वि. भाग 2 पृ. 89
167. तदेव पृ. 110
168. तदेव पृ. 138
169. तदेव पृ. 300

# II vol.

## विषयानुक्रमणिका

## ॥ अथ तृतीया ॥

**कारकविभक्तितृतीयायाः क्रियान्वयिकर्तृत्वं करणत्वं चार्थः। "कर्तृकरणयोस्तृतीया" इत्यनुशासनात्। कर्तृत्वं च मुख्यं क्रियानुकूलकृतिरेव सा च कर्त्राख्यातसमभिव्याहृते 'चैत्रः पचति' इत्यादौ क्रियाविशेष्यतयाऽऽख्यातेन प्रतिपाद्यते। 'चैत्रेण पच्यते तण्डुलः' 'चैत्रेण शय्यते' इत्यादिकर्मभावाख्यातस्थले च क्रियायां विशेषणतया तृतीयया सा प्रत्याय्यते।**

**यत्तु तत्राप्याख्यातार्थ एव कृतिः तृतीयार्थश्चाधेयत्वम्,**

---

**कारकद्वितयग्रन्थविशेषार्थविदां नृणाम्।**
**इतः क्लेशकरं स्वल्पं ज्ञातव्यमवशिष्यते॥**

तृतीयाविभक्त्यर्थनिरूपणमारभते—कारकेति। उक्ते प्रमाणमाह—कर्तृकरणयोरिति। कर्तृत्वस्वरूपमाह—कर्तृत्वमिति। सा=कृतिः। समभिव्याहृते= समभिव्याहारे। क्रियाविशेष्यतयेति—'पचति' इत्यादौ 'पाकानूकूलकृतिमान्' 'इति बोधोदयात्' कृतेः क्रियाविशेष्यत्वं प्राप्तम्। आख्यातेन=कर्त्राख्यातेन। 'चैत्रेण पच्यते तण्डुलः' इति कर्माख्यातप्रयोगः, 'चैत्रेण शय्यते' इति भावाख्यातप्रयोगः— शीङ्धातोः कर्माभावात्। सा=कृतिः। विशेषणतयेति 'पच्यते' इत्यत्र कृतिजन्यपाकजन्यविक्लित्त्याश्रयस्तण्डुलः 'शय्यते' इत्यत्र च कृतिजन्यशयनव्यापार इति बोधोदयात् कृतेः क्रियाविशेषणत्वमेव प्राप्तम्। क्रियाविशेषणतया चात्र कृतिः तृतीयया प्रतिपाद्यते नत्वाख्यातेन— अन्यथा तृतीयाया नैरर्थक्यं स्यात् "कर्तृकरणयोः" इति सूत्रेण च तृतीयाया कर्तृत्वार्थकत्वानुशासनात् कर्तृत्वं च कृतिरेवेत्यर्थः।

परिहाराय मतान्तरमनुवदति— यत्त्विति। तत्रापि= 'पच्यते' 'शय्यते' इत्युक्तकर्माख्यातभावाख्यातस्थलयोरपि। आख्यातार्थ एव कृतिर्न तृतीयार्थ

**तस्य चाख्यातार्थकृतिविशेषणतयाऽन्वयः, कृतेश्च क्रियाविशेषणतया। तथाकृतिबोधने चात्मनेपदरूपाख्यातस्य यगादिसमभिव्याहारज्ञानमपेक्षितम्– 'पचति' 'पचते' इत्यादौ तथाकृत्यन्वयाबोधात्। 'चैत्रेण ज्ञायते गम्यते' इत्यादौ तृतीयाया आधेयत्वार्थकत्वं क्लृप्तमेवेति न तत्कल्पनमऽधिकमिति, तन्न–'चैत्रेण पक्वम्' इत्यादौ तृतीयायाः कृत्यर्थकताया आवश्यकत्वात्–तत्र कृत्यर्थकाख्यातविरहेण कृतश्च कर्तृकर्मवाचकत्वेन कृत्यर्थकताविरहात्।**

**यदि च कर्तृकृतः कृतावेव शक्तिर्न तु विशिष्टे 'ज्ञाता' इत्यादौ त्वाश्रयार्थकतायाः कृतः क्लृप्तत्वेन तत्र कृत्यन्वयादेव**

---

इत्यर्थः। उक्तस्थलीयतृतीयाया अर्थमाह–तृतीयार्थश्चेति। तस्य=तृतीयार्थभूताधेयत्वस्य। तथा च 'चैत्रेण पच्यते' इत्यत्र चैत्रवृत्तिकृतिजन्यपाकजन्यविक्लित्याश्रयस्तण्डुलः 'चैत्रेण शय्यते' इत्यत्र च चैत्रवृत्तिकृतिजन्यशयनव्यापार इति बोधोदयाद् व्यापारे कृतेः कृतौ चाधेयत्वस्य=वृत्तित्वस्य विशेषणत्वं प्राप्तम्। "क्रियाविशेषणतया" इत्यत्र 'अन्वयः' इति शेषः। तथाकृतिबोधने= 'चैत्रवृत्तिकृतिजन्यव्यापारः' इत्येवं क्रियाविशेषणतया कृतिबोधने। उक्ते हेतुमाह–पचतीति। तथाकृत्यन्वयबोधात्=कृतेः क्रियायां विशेषणतया शाब्दबोधाविषयत्वात्। नन्वेवं तृतीयाया आधेयत्वार्थकत्वकल्पनमधिकं स्यात् तेन च गौरवं स्यादित्याशङ्क्याह–चैत्रेणेति, 'चैत्रेण ज्ञायते' इत्यत्र 'चैत्रवृत्तिज्ञानम्' 'चैत्रेण गम्यते' इत्यत्र च 'चैत्रवृत्तिसंयोगानुकूलव्यापारः' इति बोधोदयात् तृतीयाया आधेयत्वार्थकत्वं क्लृप्तमेवेति नाधिककल्पनापत्तिरित्यर्थः। तत्कल्पनम्=आधेयत्वार्थकत्वकल्पनम्। उक्तमतं परिहरति–तन्नेति, 'चैत्रेण पक्वम्' इत्यत्राख्यातमेव नास्ति यस्यार्थः कृतिः स्यात् कृत्प्रत्ययस्य च कर्मवाचकत्वेन कृतिवाचकत्वं न संभवतीत्यत्र विवशं तृतीयाया एव कृतिवाचकत्वं स्वीकार्यं तथा चात्र तृतीयायाः कृतिवाचकत्वे प्राप्ते 'चैत्रेण पच्यते' इत्यादावपि तृतीयाया एव कृतिवाचकत्वं युक्तं नाख्यातस्येत्यर्थः।

**कर्तृलाभसंभवादित्युच्यते? तथापि कर्मकृतः कृत्यर्थत्वम-प्रसक्तमेव। उक्तप्रत्ययस्य क्वचित् कर्तृवाचकत्वेऽपि 'चैत्रेण पाच्यः' 'दुष्पचश्चैत्रेणौदनः' 'चैत्रेणौदनस्य पाकः' इत्यादौ कृतां न कृतिबोधकत्वमिति तत्र कृतिबोधानुरोधेन तृतीयायाः कृतिवाचकत्वमावश्यकम्। एवं च 'चैत्रेण पच्यते' इत्यादावपि तृतीययैव कृतिर्बोध्यते, तत्र चैत्रादेः संबन्ध एवाधेयत्वमित्यत एव निर्वाहे कृतावाऽऽधेयत्वस्य विशेषतया भानोपगमस्या-**

ननु 'चैत्रेण पक्वम्' इत्यादौ कर्मकृतः कृतिवाचकत्वाभावेपि कर्तृवाचककृत्प्रत्ययस्य तु कृतावेव शक्तिः स्वीकार्या लाघवात् कृतौ शक्तौ कृतित्वमेव शक्यतावच्छेदकं कर्तरिशक्तौ तु कृतेः शक्यतावच्छेदकत्वं स्यात् कृतीनां च नानात्वाद् गौरवं स्यादिति न विशिष्टे=कृतिविशिष्टे कर्तरि शक्तिर्येन कर्तृकृतः कर्तृवाचकत्वेन तृतीयायाः कृतिवाचकत्वं प्रसज्येत तस्मात् तृतीयार्थ आधेयत्वमेवेति यदुक्तं तदेव युक्तमित्यर्थः। नन्वेवं कर्तृलाभः कथं स्यादित्याशङ्क्याह—ज्ञातेति, 'ज्ञाता' इत्यत्र 'ज्ञानाश्रयः' इति बोधोदयादाश्रयार्थकत्वं कृत्प्रत्ययस्य क्लृप्तमेव तथा च कर्तृकृतां कृतावाश्रये च शक्तिरिति प्राप्तं तत्र=प्रत्ययार्थाश्रये प्रत्ययार्थकृतेरन्वयादेव कर्तृलाभः कर्तृविषयकबोधः सम्भवत्येव कृत्यन्वयिन आश्रयस्यैव। कर्तृपदार्थत्वादिति कर्तृकृतां कृतावेव शक्तिः। तथा च 'पक्ता' इत्यत्र 'पाककृत्याश्रयः' 'गन्ता' इत्यत्र 'गमनकृत्याश्रयः' इत्येवं बोधः उन्नेय इत्याशङ्क्याह—यदीति। उत्तरमाह—तथापीति, कर्तृकृत्प्रयोगस्थले उक्तरीया कर्तृलाभसंभवेन कर्तृकृतः कृतिवाचकत्वसंभवेऽपि कर्मवाचककृत्प्रत्ययस्य तु कृतिवाचकत्वं कथमपि न संभवतीति 'चैत्रेण कृतम्' इत्यादिकर्म-कृत्समभिव्याहारस्थले तृतीयाया एव कृतिवाचकत्वं स्वीकार्यमित्यर्थः। कर्तृकृतः क्वचित् कर्तृवाचकत्वेनोक्तलाघवानुरोधात् कृतिवाचकत्वमभ्युपगम्यापि तृतीयायाः कृतिवाचकत्वावश्यकतामाह—उक्तेति, उक्तप्रत्ययस्य=कृत्प्रत्ययस्य क्वचित्='कर्ता पक्ता' इत्यादौ कर्तृवाचकत्वे प्राप्ते लाघवात् कृतिवाचकत्वे स्वीकृते तृतीयायाः कृत्यवाचकत्वे प्रसक्तेपि 'चैत्रेण पाच्यः' इत्यादिस्थले कृत्प्रत्ययस्य कृतिबोधकत्वं नास्ति भवति च कृतेर्बोध इति विवशं तृतीयाया एव कृतिबोधकत्वं स्वीकार्यमावश्यकं चेत्यर्थः। उपसंहरति—एवं चेति,

**नुचितत्वात्, तथा सति तत्संसर्गस्यापि विषयताकल्पनाधिक्यात्। तादृशवाक्यज्ञानघटितशाब्दसामग्र्यामधिकोपस्थितिनिवेशेन च गौरवात्।**

**अथ तत्र कृतेस्तृतीयार्थतोपगमे 'चैत्रेण पच्यते न मैत्रेण' इत्यादौ तृतीयान्तार्थमैत्रीयकृतेरभावः पाकेऽन्वेतीत्युपेयं तस्याश्च समवायसंबन्धावच्छिन्नाभावो मैत्रकर्तृकपाकेपीत्यऽतिप्रसङ्गः, जन्यतायाश्च वृत्त्यनियामकतया तत्संबन्धावच्छिन्नाभावः प्रसिद्ध्यत्येव न, मैत्रकर्तृकपाककर्मत्वाभावस्य कर्मणि**

---

उक्तरीत्या तृतीयायाः कृतिवाचकत्वे सिद्धे 'चैत्रेण पच्यते' इत्यादिस्थलेपि तृतीयाया एव कृतिबोधकत्वं स्वीकार्यं न त्वाख्यातस्येत्यर्थः। तथा च तत्र=कृतौ चैत्रादेः संबन्ध एवाधेयत्वम्=चैत्रादेः स्ववृत्तिकृतावाऽऽधेयता-संबन्धेनान्वयो भवतीत्याधेयत्वस्य संबन्धत्वेन रूपेणापि बोधविषयतानिर्वाहे संभवति सति तृतीयाया आधेयत्वे शक्तिं स्वीकृत्य तादृशतृतीयार्थभूत-स्याधेयत्वस्य कृतौ विशेषणत्वेन रूपेण भानस्वीकारो नोचित एवेत्यर्थः। विपक्षे बाधकमाह—तथा सतीति, आधेयत्वस्य तृतीयार्थत्वे तेन च विशेषणत्वे स्वीकृते तत्संसर्गस्यापि=आधेयत्वसंसर्गस्याप्यधिकस्य शाब्दबोधविषयतापत्त्या गौरवं स्यादित्यर्थः। किं चाधेयत्वस्य विशेषणत्वे विभिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वस्थले आधेयत्वोपस्थितेरपि तादृशशाब्दसामग्र्यां निवेशापत्त्या गौरवं स्यादित्याह—तादृशेति, तस्मात् तृतीयायाः कृतिवाचकत्वमेव युक्तं नाधेयत्ववाचकत्वमित्यर्थः।

आशङ्कते—अथेति। कृतेस्तृतीयार्थतोपगमे 'चैत्रेण पच्यते न मैत्रेण' इत्यत्र मैत्रेणेति तृतीयान्तार्थो यो मैत्रीयकृतिस्तदभावस्य पाके एवान्वयः स्यात् तस्याः=कृतेश्च समवायेनाभावो मैत्रकर्तृकपाकेप्यस्त्येव समवायेन कृतेरात्ममात्रवृत्तित्वादित्यऽतिप्रसङ्गः=मैत्रकर्तृकपाकसत्त्वेपि 'मैत्रेण न पच्यते' इति प्रयोगापत्तिरूपोऽतिप्रसङ्गः स्यात्, यदि चैत्रकर्तृकपाके मैत्रकृतेर्जन्यता-संबन्धेनाऽभाव उच्येत तदपि न संभवति—जन्यतासंबन्धस्य वृत्त्यनियामक-तयाऽभावीयप्रतियोगितावच्छेदकत्वासंभवादित्याह—जन्यतायाश्चेति। यदि 'चैत्रेण पच्यते न मैत्रेण' इत्यत्र तण्डुले मैत्रकर्तृकपाककर्मत्वस्याश्रयतासंबन्धेनाभाव

**तण्डुलादौ प्रतीतिश्च कर्मवाचकपदासमभिव्याहारस्थले दुर्घटा, आधेयत्वस्य तृतीयार्थत्वे चाधेयत्वाभावबोध एव कृता-वङ्गीक्रियते।**

**न च तथा सति मैत्रचैत्रोभयकर्तृकपाकस्थले चैत्रीय-पाककृतौ मैत्र वृत्तित्वाभावसत्त्वात् 'मैत्रेण न पच्यते' इतिप्रयोगापत्तिरिति वाच्यम्, 'मैत्रेण न पच्यते' इत्यत्र वर्तमानपाकानुकूलकृतित्वावच्छेदेन मैत्रवृत्तित्वाभावबोधनाद् उक्तस्थले च तादृशकृतित्वसामानाधिकरण्येन मैत्रवृत्तित्वसत्त्वात् तादृशवाक्याऽप्रामाण्यात्। वर्तमानत्वस्य कृतिविशेषणतया च 'चैत्रेण पक्ष्यतेऽपच्यत न तु पच्यते' इत्युपपद्यते। क्रियाविशेषस्य तथात्वाद् यदा मैत्रेणान्यत् क्रियते न तु पच्यते तदा 'मैत्रेण न पच्यते' इति प्रयोगश्च।**

---

उच्यते, तदपि न संभवति कर्मवाचकतण्डुलादिपदाभावे पदानुपस्थिततण्डुलादौ मैत्रकर्तृकपाककर्मत्वाभावप्रतीतेरपि दुर्घटत्वात्—तण्डुलोपस्थित्य-भावादित्याह—तस्मान्न कृतिस्तृतीयार्थः किं त्वाधेयत्वमेव, तथा च 'चैत्रेण पच्यते न मैत्रेण' इत्यत्र पाकानुकूलकृतावाऽऽधेयत्वस्य=मैत्रवृत्तित्वस्याभाव आश्रयतासंबन्धेन प्राप्तः 'पाकानुकूला कृतिर्मैत्रवृत्तिर्न' इति, अत्र च न कोपि दोष इत्याधेयत्वमेव तृतीयार्थ इत्यर्थः।

ननु तथा सति=आधेयत्वस्य तृतीयार्थत्वं स्वीकृत्य कृतौ मैत्रवृत्तित्वाभावस्वीकारे चैत्रमैत्रोभयकर्तृकपाकस्थलेपि चैत्रकृतौ मैत्रवृत्तित्वाभावस्य सत्त्वेन तद्बोधकस्य 'मैत्रेण न पच्यते' इति प्रयोगस्यापत्तिः स्यादित्याशङ्क्याह- न चेति। परिहारमाह- मैत्रेणेति 'मैत्रण न पच्यते'। इति वाक्येन वर्तमानकालिकायामेव पाकानुकूलकृतौ मैत्रवृत्तित्वाभावः प्रत्याय्यते उक्तस्थले=चैत्रमैत्रोभयकर्तृकपाकस्थले च तादृशकृतित्वसामानाधिकरण्येन= वर्तमानपाकानुकूलकृतित्वसामानाधिकरण्येन=वर्तमानायां पाकानुकूलायां कस्यांचित् (मैत्रसमवेतायाम्) कृतौ मैत्रवृत्तित्वस्यापि सत्त्वादेव तदभावबोधकस्य 'मैत्रेण न पच्यते' इति वाक्यस्याऽप्रामाण्यमेवेति न

**न चाख्यातेन कालस्य कृतिविशेषणतया बोधनात् कालविशेषविशेषितकृतित्वस्यान्वयितावच्छेदकतया तदवच्छेदेन नञाऽभावः शक्यते बोधयितुं न तु कालक्रियाविशेषोभय-विशेषितकृतित्वावच्छेदेन कर्मप्रत्ययस्थले क्रियायाः कृतिविशेषणत्वाभावेन तद्घटितधर्मस्याऽन्वयितावच्छेद-**

---

प्रयोगापत्तिरित्यर्थः। कृतौ वर्तमानत्वविशेषणनिवेशस्य फलमाह—वर्तमानत्वस्येति, 'न तु पच्यते' इत्यनेन वर्तमानपाकानुकूलकृतावेव चैत्रवृत्तित्वाभावात्, भूतभविष्यत्पाकानुकूलकृतौ च चैत्रवृत्तित्वस्यैव सत्त्वात् 'चैत्रेण, पक्ष्यतेऽपच्यत न तु पच्यते' इति प्रयोग उपपद्यते एवं मैत्रकर्तृकान्यक्रियाकाले क्रियाविशेषस्य= तादृशान्यक्रियाया एव तथात्वात्=वर्तमानकृतिजन्यत्वात् पाकानुकूलक्रियायाश्च वर्तमानकृतिजन्यत्वाभावात् 'मैत्रेण न पच्यते' इति प्रयोगश्चोपपद्यते इत्यर्थः।

शङ्कते—न चेति, 'मैत्रेण न पच्यते' इत्यत्र कालविशेषो वर्तमानकालः स चाख्यातेन कृतिविशेषणतया बोध्यते, मैत्रवृत्तित्वाभावस्य कृतावन्वयादन्वियिनी कृतिः, अन्वयितावच्छेदकं च कृतित्वम्, तदवच्छेदेन= वर्तमानकालावच्छिन्नकृतित्वावच्छेदेन हि कृतौ अभावः=मैत्रवृत्तित्वाभावो बोधयितुं शक्यते यथा—'वर्तमानकालावच्छिन्न कृतिर्मैत्रवृत्तिर्न' इति, न त्विति—कालक्रियोभयविशेषेण विशेषितकृतित्वावच्छेदेन तु नञाऽभावो न बोधयितुं शक्यते—'मैत्रेण पच्यते' इत्यादिकर्मप्रत्ययस्थले 'मैत्रवृत्तिकृति-जन्यपाकजन्यविक्लित्याश्रयस्तण्डुलः' इत्याकारकबोधोदयेन कृतेरेव क्रियायां विशेषणत्वेन कृतौ क्रियाया विशेषणत्वाभावात् तद्घटितधर्मस्य= पाकादिक्रियाविशेषितकृतित्वस्य अन्वयितावच्छेदकत्वाभावात् तथा च 'मैत्रेण न पच्यते' इत्यत्र वर्तमानकालिककृतिसामान्येपि मैत्रवृत्तित्वाभावस्यान्वयो न संभवति—मैत्रे पाककृतेरसंभवेऽपि कृत्यन्तरस्य बाधाभावात् वर्तमानकालिकपाकानुकूलकृतावपि मैत्रवृत्तित्वाभावस्यान्वयो न संभवतिः—कृतावुक्तरीत्या पाकक्रियाया विशेषणत्वाभावेन पाकक्रियावच्छिन्न (विशेषित) कृतित्वस्याऽन्वयितावच्छेदकत्वाभावादिति यदुक्तम्—"आधेयत्वस्य तृतीयार्थत्वे चाधेयत्वाभावबोध एव कृतावङ्गीक्रियते ३९०" इति तन्नोपपद्यते। अस्मन्मते च तृतीयावाच्यमैत्रवृत्तिकृतौ पाकानुकूलत्वाभावबोधने किं वा

**कत्वाभावादिति वाच्यम्, क्रियाविशेषघटितधर्मस्यान्वयितानवच्छेदकत्वेपि तदवच्छिन्नत्वविशिष्टविशेषणताया अभावसंसर्गतया भानसंभवेन सामञ्जस्यात्।**

**न चान्वयितावच्छेदकावच्छिन्नत्वमेव विशेषणसंबन्धे भासते इतिनियमः, तथा सति 'शरदि पुष्प्यन्ति सप्तच्छदाः' इत्यादौ सप्तच्छदपुष्पोत्पत्तित्वादेः शरद्वृत्तित्वाद्यन्वयि-**

---

वक्ष्यमाणदिशा पाके मैत्रवृत्तिकृतिजन्यत्वाभावबोधने न काप्यनुपपत्तिरित्यर्थः। पूर्वपक्षी परिहरति–क्रियाविशेषेति, उक्तरीत्या क्रियाविशेषघटितधर्मस्य= पाकक्रियाविशेषितकृतित्वस्यान्वयितानवच्छेदकत्वेपि तदवच्छिन्नवविशिष्ट-विशेषेणतायाः= पाकक्रियावच्छिन्नत्वसमानाधिकरण- स्वरूपस्य अभावसंसर्गतया=मैत्रवृत्तित्वाभावसंसर्गतया भानसंभवेन समञ्जस्यात्, अयं भावः–यद्यपि शाब्दबोधकाले कर्मप्रत्ययस्थले कृतेरेव क्रियायां विशेषणत्वेन पाकक्रियायाः कृतौ विशेषणत्वाभावात् पाकक्रियावच्छिन्नकृतित्व-स्यान्वयितावच्छेदकत्वं न संभवतीति पाकक्रियावच्छिन्नकृतित्वावच्छेदेन मैत्रवृत्तित्वाभावस्यान्वयोपि न संभवति तथापि अभावो हि स्वरूपसंबन्धेत्यपरपर्यायेण विशेषणतासंबन्धेन सर्वत्रान्वितो भवतीत्यत्र मैत्रवृत्तित्वाभावस्य स विशेषणतासंबन्धः तदवच्छिन्नत्वविशिष्टः (पाकक्रियावच्छिन्नत्वसमानाधिकरणः) ग्राह्यः–कृतौ तादृशः स्वरूपलक्षणः संबन्धोप्यस्त्येव चैत्रवृत्तिकृतेः पाकजनकत्वेन वस्तुगत्या कृतावनुकूलतासंबन्धेन पाकक्रियान्वयस्य सत्त्वेन कृतौ तदवच्छिन्नत्वम्=पाकक्रियावच्छिन्नत्वमस्त्येव शाब्दबोधे तस्य भानं न संभवतीत्यन्यदेतत् तथा च पाकक्रियावच्छिन्नत्व-समानाधिकरणस्वरूपसंबन्धेन चैत्रादिवृत्तिपाककृतावेव मैत्रवृत्तित्वाभावस्यान्वयः संभवति न कृतिसामान्ये इति नोक्तदोष इति न 'मैत्रेण न पच्यते' इति प्रयोगानुपपत्तिः, न वा "आधेयत्वस्य तृतीयार्थत्वे चाधेयत्वाभावबोध एव कृतावङ्गीक्रियते" इत्युक्तस्यानुपपत्तिः। पाकक्रियावच्छिन्नत्वस्य संसर्गकोटौ प्रवेशेन तदुपस्थित्यपेक्षापि नास्तीति सर्वं समञ्जसमिति।

नन्वन्वयितावच्छेदकावच्छिन्नत्वमेव विशेषणस्य संबन्धे भासते न तु तदन्यधर्मावच्छिन्नत्वमपि यथा–'घटवद् भूतलम्' इत्यत्र भूतले

**तानवच्छेदकत्वादाऽऽख्यातान्तप्रतिपाद्यतावच्छेदकपुष्पोत्पत्तित्वाद्य-वच्छेदेन च शरद्वृत्तित्वान्वयबाधादऽवच्छेदकावच्छेदेनान्वया-**

---

घटसंयोगोप्यस्ति भूतलत्वमप्यस्तीति विशेषणस्य घटस्य संबन्धे संयोगे भूतलत्वावच्छिन्नत्वमेव भासते नान्यधर्मावच्छिन्नत्वं तथा च 'मैत्रेण न पच्यते' इत्यत्र यदुक्तम्—'तदवच्छिन्नत्वविशिष्टविशेषणतासंबन्धेन कृतौ मैत्रवृत्तित्वाभावस्यान्वय उपेयते' इति तन्न युक्तं किंतु कृतित्वस्यैवान्वयिता-वच्छेदकत्वेन केवलकृतित्वावच्छिन्न (कृतित्वावच्छिन्नत्वसमानाधिकरण) विशेषणतासंबन्धेनैव कृतौ मैत्रवृत्तित्वाभावस्यान्वयः स्वीकार्यः, पाककृतित्वस्य न्यूनवृत्तित्वेनान्वयितावच्छेदकत्वाभावाच्च, कृतित्वावच्छिन्नत्वावच्छिन्न-विशेषणतासम्बन्धेन कृतौ मैत्रवृत्तित्वाभावान्वये हि कृतित्वावच्छेदेन यावत्कृतौ मैत्र वृत्तित्वाभावान्वय उपलभ्येतेति "मैत्रेण भक्ष्यते" इत्यादि प्रयोगोऽपि न स्यात्। कृतित्वावच्छिन्नविशेषणतासंबन्धं परित्यज्य पाककृतित्वावच्छिन्न-विशेषणतासंबन्धस्य ग्रहणे चैतन्नियमस्य व्याघातः स्यादित्याशङ्क्याह—न चेति। किं वात्रैवकारस्य 'भासते एव' इत्येवमन्वयः। किं चान्वयिता-वच्छेदकावच्छिन्नत्वं विशेषणसंबन्धे भासते यदि तदा **'विशेषणस्यान्वयिता-वच्छेदकावच्छेदेनान्वयो भवति'** इत्ययमेवार्थः प्राप्तः—यत्र विशेषणं भवति तत्रैव विशेषणसंबन्धस्यापि संभवादिति विज्ञेयम्। अयं नियम एव नास्ति येनोक्तदोषापत्तिः स्यात् तथा **चोक्तवर्त्तमानपाककृतित्वावच्छिन्न-विशेषणताया** एव संबन्धत्वात् वर्तमानपाककृतावेव चैत्रादिनिष्ठायां मैत्रवृत्तित्वाभावस्यान्वयो जायते न तु कृतिसामान्ये इति न 'मैत्रेण पक्ष्यते' 'मैत्रेण गम्यते पक्ष्यते' इत्यादिप्रयोगानुपपत्तिरित्यर्थः। उक्तनियमस्वीकारे बाधकमाह—तथा सतीति, तथा सति=एतन्नियमस्वीकारे हि 'शरदि पुष्प्यन्ति सप्तच्छदाः' इत्यत्र शरद्वृत्तित्वं विशेषणमस्ति तदन्वयितावच्छेदकत्वं सप्तच्छदपुष्पोत्पत्तित्वस्य। न संभवति। 'पुष्प्यन्ति', इत्यनेनोपस्थित्यभावात् किन्तु पुष्पोत्पत्तित्वस्यैव पुष्पोत्पत्तित्वावच्छेदेन च शरदवृत्तित्वस्यान्वयो न संभवति सकलपुष्पोत्पत्तिषु शरदवृत्तित्वस्यासंभवादित्यवच्छेदकावच्छेदेन अन्वयितावच्छेदकावच्छेदेन (पुष्पोत्पत्तित्वावच्छेदेन) अन्वयानुपपत्तेः= विशेषणान्वयो न संभवति। अन्वयितावच्छेदकसामानाधिकरण्यमात्रेण= किंचित्पुष्पोत्पत्तौ तदन्वयोपगमे=शरद्वृत्तित्वस्यान्वयोपगमे च सप्तच्छद-

**नुपपत्तेः। अन्वयितावच्छेदकसामानाधिकरण्यमात्रेण च तदन्वयोपगमे 'शरदि पुष्प्यन्ति सप्तच्छदाः' 'शरदि पुष्प्यन्ति चम्पकाः' इत्यऽविशेषेणप्रयोगापत्तिः।**

**यदि च तत्र शरत्संबन्धः सप्तच्छदविशेषणतया भासते न पुनराख्यातार्थे धातुमात्रार्थे वा पुष्पोत्पत्तौ। अत एव तत्र कारकविभक्तिरूपसप्तम्यनुपपत्त्या कालरूपविशेषणपदोत्तरं**

---

पुष्पोत्पत्तौ शरद्वृत्तित्वान्वयस्य संभवेपि दोहदवशात् किंचित् चम्पकपुष्पोत्पत्तेरपि शरदि संभवेन किंचित्चम्पकपुष्पोत्पत्तावपि शरद्वृत्तित्वसंभवात् 'शरदि पुष्प्यन्ति सप्तच्छदाः' इतिवत् 'शरदि पुष्प्यन्ति चम्पकाः' इत्यपि प्रयोगः स्यात्, न चैतदिष्टमिति दोषद्वयपरिहाराय यथा 'शरदि पुष्प्यन्ति सप्तच्छदाः' इत्यत्र सप्तच्छदपुष्पोत्पत्तित्वावच्छेदेनैव शरद्वृत्तित्वस्यान्वय उपेयते न तु पुष्पोत्पत्तित्वरूपान्वयितावच्छेदकावच्छेदेन तथैव मैत्रेण न पच्यते इत्यत्रापि वर्तमानपाककृतित्वावच्छेदेन मैत्रवृत्तित्वाभावस्यान्वय उपेयते न तु शुद्धान्वयितावच्छेदककृतित्वावच्छेदेनेत्यर्थः।

ननु 'शरदि पुष्प्यन्ति सप्तच्छदाः' इत्यत्र शरद्वृत्तित्वमाऽऽख्यातार्थे=पुष्पोत्पत्त्याश्रयत्वेऽपि विशेषणं नास्ति तथा धात्वर्थभूतपुष्पोत्पत्तावपि विशेषणं नास्ति येनोक्तदोषापत्तिः स्यात् किं तु शरद्वृत्तित्वं सप्तच्छदे एव विशेषणमस्ति, अत एव=शरदीति सप्तम्यर्थवृत्तित्वस्य सप्तच्छदद्रव्ये विशेषणत्वेन क्रियायां विशेषणत्वाभावादेव कारकविभक्तिरूपसप्तम्या अत्र प्राप्तिर्नास्तीति विचार्य शर्ववर्मणा व्याकरणकर्त्रा विशेषणीभूतकालविशेषवाचकपदोत्तरं पृथगेव सप्तम्यनुशिष्टा, शरद्वृत्तित्वस्य सप्तच्छदाऽविशेषणत्वे तदनुशासनं व्यर्थमेव स्यात्, तथा चात्र 'शरद्वृत्तित्वविशिष्टाः सप्तच्छदाः पुष्प्यन्ति' ति शाब्दबोधः। तत्र च **क्रियानिमित्तत्वमेव** कारकत्वं कारकत्वव्याप्यं च कर्तृत्वमिति कारकत्वगर्भकर्तृत्वस्याख्यातार्थत्वे=आख्यातस्य कर्तृत्वे शक्तिस्वीकारपक्षे आख्यातार्थभूतस्य कर्तृत्वरूपस्य पुष्पोत्पत्तिनिमित्तत्वस्य विशिष्टान्वयानुरोधेन=विशिष्टे=शरद्वृत्तित्व (शरत्संबन्ध) विशिष्टसप्तच्छदेष्वऽन्वयानुरोधेन शरद्वृत्तित्वविशिष्टसप्तच्छदानां पुष्पोत्पत्तौ कर्तृत्वरूपनिमित्तत्वे प्राप्ते शरत्संबन्धस्यापि पुष्पोत्पत्तिनिमित्तत्वं प्राप्तं तथा च सप्तच्छदपुष्पोत्पत्तौ

**स्वातन्त्र्येण सप्तमी शर्ववर्मणाऽनुशिष्टाः एवं च क्रियानिमित्त-त्वरूपकारकत्वगर्भकर्तृत्वस्याख्यार्थत्वे पुष्पोत्पत्तिनिमित्तत्व-रूपाख्यातान्तार्थस्य विशिष्टान्वयानुरोधेन शरत्संबन्धेप्यन्वय उपगन्तव्य इति कारकत्वस्याख्यातार्थत्वानुपगमेऽपि 'शीतलं सरोऽवगाढतो निदाघदु:खं व्यपैति' इत्यादाविवोद्देश्यविधेय-भावमहिम्नोद्देश्यविशेषणेन शरत्संबन्धेन विधेयभूतपुष्पोत्पत्तेः प्रयोज्यप्रयोजकभावस्य संसर्गमर्यादया भानमौत्सर्गिकमिति चम्पकादिपुष्पोत्पत्तौ शरत्संबन्धनिमित्तकत्वाभावान्नोक्तातिप्रसङ्गः**

---

शरत्संबन्धस्य निमित्तत्वात् 'शरदि पुष्प्यन्ति सप्तच्छदाः' इति प्रयोगो भवति, शरदि चम्पकपुष्पोत्पत्तिस्तु दोहदादिनिमित्तिका भवति न तु शरत्संबधनिमित्तिका स्वभावतश्चम्पकपुष्पाणां शरदि जायमानत्वाभावादिति 'शरदि पुष्प्यन्ति चम्पकाः' इति प्रयोगोपपत्तिर्नास्ति; वृक्षादिजडपदार्थेषु कर्तृत्वस्य बाधादत्र कर्तृत्वलक्षणकारकत्वे शक्त्यऽस्वीकारपक्षे च यद्यपि शरद्वृत्तित्वविशिष्टसप्तच्छदानां पुष्पोत्पत्त्याश्रयत्वात् विशेषणीभूतशरदः सप्तच्छदपुष्पोत्पत्त्याश्रयत्ववत् चम्पकपुष्पोत्पत्त्याश्रयत्वमपि शरदि निराबाधमेवेति 'शरदि पुष्प्यन्तिचम्पकाः' इति प्रयोगः स्यादेव तथाप्यऽस्मिन् पक्षे यथा 'शीतलं सरः' इत्यत्र शीतलसरोऽवगाहनमुद्दिश्य निदाघदु:खापगमो विधीयते इत्युद्देश्यविधेयभावमहिम्ना निदाघदु:खापगमस्य शीतलसरोऽवगाहनस्य च परस्परं प्रयोज्यप्रयोजकभावः संसर्गमर्यादया भासते (उपस्थापकाभावात्) तथैव 'शरदि पुष्प्यन्ति सप्तच्छदाः' इत्यत्रापि शरद्वृत्तित्वविशिष्टसप्तच्छदा-नुद्दिश्य पुष्पोत्पत्तिर्विधीयते इति विधेयभूतपुष्पोत्पत्तेरुद्देश्यविशेषणीभूत-शरत्संबन्धस्य च परस्परं प्रयोज्यप्रयोजकभावः संसर्गमर्यादया भासते तथा च सप्तच्छदपुष्पोत्पत्तौ शरत्संबन्धप्रयोज्यत्वस्य सत्त्वात् 'शरदि पुष्प्यन्ति सप्तच्छदाः' इति प्रयोगो भवति दोहदवशाज्जायमानचम्पकपुष्पोत्पत्तौ च शरत्संबन्धप्रयोज्यत्वाभावादुक्तातिप्रसङ्गः='शरदि पुष्प्यन्ति चम्पकाः' इति प्रयोगापत्तिर्नास्ति, इति=तथा चोक्तस्थले='शरदि पुष्प्यन्ति सप्तच्छदाः' इत्यत्रान्वयितावच्छेदकावच्छेदेन=पुष्पोत्पत्तित्वावच्छेदेन शरद्वृत्तित्वस्यान्वय एव नोपेयते (सप्तच्छदे एवान्वयस्वीकारात्) येनान्वयितावच्छेदकावच्छिन्नत्वस्य

